॥ श्रीः ॥

सर्वशास्त्रमयान् सर्वयोगदक्षान् जगद्गुरून् ॥
श्रीईविशुद्धानन्दनामवाग्देवान् समुपास्महे ॥ १ ॥

# यतीन्द्रचरितामृतमहोदधेः

## प्रथमः कल्लोलः ।

श्रीईमद्भावानन्दतीर्थचरितानुकथामिषात् ॥
शास्त्रवाक्यनिगूढार्थविमर्शोऽयं मनीषिणाम् ॥ १ ॥

॥ श्रीः ॥

आस्तिकप्रवरहथुआप्रमुखदेशनरपतिमहाराजश्री१०८कृष्णप्रतापसिंहदेवश्रद्धया
काश्यां मेडिकल् हालनामके यन्त्रालये मुद्रितः । सं· १९४७ वसन्तादौ ॥

श्रीईमद्भावानन्दतीर्थ-
चरिताणुकथामिषात् ॥
शास्त्रवाक्यनिगूढार्थ-
विमर्शोऽयं मनीषिणाम् ॥ १ ॥

॥ श्रीगणेशाय नमः ॥

# जगद्गुरुश्री१०८शङ्कराचार्यजी की गुरुशिष्यपरम्परा का सूचकपत्र ।

नारायण
|
पद्मभू
|
वशिष्ठ
|
शक्ति
|
तत्पुत्रपराशर
|
व्यास
|
शुक
|
गौड़पाद
|
गोविन्दयोगीन्द्र
|
श्री१०८शङ्कराचार्य

| | | | |
|---|---|---|---|
| विश्वरूपाचार्य । | पद्मपादाचार्य । | तोटकाचार्य । | पृथ्वीधराचार्य । |
| पश्चिमाम्नाय । | पूर्वाम्नाय । | उत्तराम्नाय । | दक्षिणाम्नाय । |
| शारदामठ । | कश्यपगोत्र । | जोशीमठ । | शृङ्गेरीमठ । |
| कीटवारसंप्रदाय । | गोवर्द्धनमठ । | आनन्दवारसंप्रदाय । | भूवारसंप्रदाय । |
| अवगतगोत्र । | भोगवारसंप्रदाय । | भृगुगोत्र । | भूर्भुवगोत्र । |
| तीर्थ, आश्रम, शीपाद, उपपद । | वन, आरण्य, उपपद । | गिरि, पर्वत, सागर, उपपद । | सरस्वती, भारती, पुरी, उपपद । |
| द्वारकाक्षेत्र । | पुरुषोत्तमक्षेत्र । | बदरिकाश्रममुक्तिक्षेत्र । | रामेश्वरक्षेत्र । |
| सिद्धेश्वरदेवता । | जगन्नाथदेवता । | नारायणदेवता । | आदिवाराहदेवता । |
| भद्रकालीदेवी । | विमलादेवी । | पुण्यागिरिदेवी । | कामाक्षादेवी । |
| गङ्गा, गोमती, तीर्थ । | महोदधितीर्थ । | अलखनन्दातीर्थ । | तुङ्गभद्रातीर्थ । |
| स्वरूपब्रह्मचारी । | प्रकाशब्रह्मचारी । | नन्दब्रह्मचारी । | चैतन्यब्रह्मचारी । |
| सामवेद । | ऋग्वेद । | अथर्ववेद । | यजुर्वेद । |
| (तत्वमसि) महावाक्य । | (प्रज्ञानमानन्दं ब्रह्म) महावाक्य । | (अयमात्मा ब्रह्म) महावाक्य । | (अहं ब्रह्मास्मि) महावाक्य । |

**यह सब मठाम्नाय आदि ग्रन्थों में लिखा है ॥**

॥ श्रीः ॥

# श्री६महाराज श्री६भावानन्दतीर्थस्वामीजी की गुरुशिष्यपरम्परा का सूचक पत्र ।

ये स्वामीजी काशीपुरी चौसट्टीघाट पर (गोपालमठ) जिस में "अद्वैत- **रघुरामानन्दतीर्थ ।** सिद्धि" आदि ग्रन्थ के कर्ता "श्रीमधुसूदनस्वामीजी" पहिले रहते थे उस में रहे।

ये स्वामीजी कुछ दिन गोपालमठ में रहके उस स्थान से विरक्त हुये **अच्युतानन्दती० ।** तो अनिकेत अर्थात् कभी कहीं कभी कहीं इस चाल से रहे, और बड़े तपस्वी थे।

कामरूपकामाक्षा के राजा चन्द्रकान्त ने काशी दशाश्वमेध घाट पर एक उत्तम मठ बनवाय के सं० १८४५ में इन स्वामीजी **महादेवानन्दती० ।** को अर्पण किया तब से ये स्वामीजी उसी मठ में रहे, और अब तक उसी मठ में उन की शिष्यपरम्परा है।

**ब्रह्मानन्दती० ।**

**नित्यानन्दती० ।**

**कृपानन्दती० । महेश्वरानन्दती० । शिवानन्दती० मौनी ।**

शङ्करानन्दती० । सर्वेश्वरानन्दती० । रुद्रानन्दती० । रामकृष्णानन्दती० । रामचन्द्रानन्दती० । श्री६भावानन्दती० ।

**माधवानन्दती० । मनीष्यानन्दती० जीवत् ।**

गोविन्दानन्दती० । सर्वेश्वरानन्दती० । केशवानन्दती० । रत्नेश्वरानन्दती० । देवानन्दती० । हरानन्दती० ।

**परीक्षितानन्दती० जी० । कृष्णानन्दती० ।**

नृसिंहानन्दती० जी० । ब्रह्मानन्दती० । शुद्धानन्दती० जी० । कैवल्यानन्दती० जी० । हरिहरानन्दती० ।

**गोकुलानन्दती० जी० । भवानन्दती० जी० ।**

रामेश्वरानन्दती० । महादेवानन्दती० । केशवानन्दती० जी० ।

**परमानन्दती० जी० ।**

निजबोधानन्द आदि दस बीस जीवत् हैं।

**सं० १९४७ वसन्तादिदिने ।**

॥ श्रीगणेशाय नमः ॥

# यतीन्द्रचरितामृतमहोदधेः

## प्रथमकल्लोलस्य

संक्षिप्तं सूचनपत्त्रम् ।

# संक्षिप्तं सूचनपत्त्रम् ।

॥ श्रीगणेशाय नमः ॥

॥ श्रीगणेशाय नमः ॥

# यतीन्द्रचरितामृतमहोदधेः

## प्रथमकल्लोलस्य

### शोधनपत्त्रम् ॥

| अशुद्धस्य | शोधनम् | पृष्ठाङ्काः | पङ्क्त्यङ्काः |
|---|---|---|---|
| नलो | न लो | २ | २१ |
| शीरु | शी रु | ४ | ५ |
| सल | लस | ४ | ५ |
| म्यम् | म्यं | ६ | १५ |
| शा | का | ७ | २ |
| ख्या | ष्या | १५ | ५ |
| ञ् त | ञ् च | ३२ | १३ |
| र्वि | र् वि | ४८ | १२ |
| द् य | द्य | ६२ | ५ |
| वै | वे | ६९ | १५ |

### सङ्केतपत्त्रम् ॥

(१) संयुक्ताक्षराण्यत्र तत्रैव यत्र समासात् स्वयं वैकपदत्वम् ।

(२) त्रिनवतितमश्लोकात् प्राक् शोधकस्यात्र न तथा दृष्टिर्यथा तत ऊर्द्ध्वम् ।

॥ श्रीईमद्भावानन्दतीर्थचरणार्पणमस्तु ॥

॥ श्रीरस्तु ॥

शिवदेव्यास्तपोमूर्त्ते-

र्मातुः पादाब्जजन्मनः ॥

पितुः श्रीईविश्वनाथस्य

कर्णाल्लेह्यादरान् मुहुः ॥ १ ॥

श्रीईमद्भावानन्दतीर्थ-
तपस्तरणिरश्मयः ॥
प्रसादयन्तु सततं
हृदब्जानिमनीषिणाम् ॥ १ ॥

॥ श्रीः ॥

# यतीन्द्रचरितामृतमहोदधेः

## प्रथमः कल्लोलः ॥

॥ श्रीगणेशाय नमः ॥

शिवदेव्यास्तपोमूर्त्तेर्मातुः पादाब्जजन्मनः ॥
पितुः श्रीविश्वनाथस्य कणाँल्लेह्ल्यादरान् मुहुः ॥ १ ॥

रेरे चित्तचकोर चञ्चल चिरात् संसारदावानलाद्
भीतो यद्यसि तर्हि भावय सखे तापोपशान्त्यै मनाक् ॥
लोकान् वीक्षयतो मनोऽनधिगतं ज्ञानप्रभाभिर्निजै-
र्भावानन्दयतीश्वरस्य चरितं शुद्धं मनीषामृतम् ॥ १ ॥

जीवानां हितकारितां प्रकटयन् शुभ्रैश्चरित्रैर्निजैः
पूर्णः श्रीपरमेश्वरोऽप्यविकलं पूर्णावतारं दधौ ॥
यत्रैषा सरयूजलाप्लुततटा यागादिधर्मोचिता
मन्वाद्यैः कथिता चिरं विजयते साकेतभूः पावनी ॥ २ ॥

विद्याचारविवेकधैर्यधनिका मेधाविनस्तापसा
आहूयाध्वरसाधनाय विधिना यत् कान्यकुब्जाद् द्विजाः ॥
श्रीरामेण समर्च्य यत्र विनयाधिक्यात् प्रतिष्ठापिता
नैच्छन् हातुममूं ततोऽपि धरणीयं सर्वतो राजते ॥ ३ ॥

यत्राद्यापि नरान् न मुञ्चति कदाप्यापामरं मार्द्दवं
सत्यं धीर्विनयस्तपस्सुचरिताचारादि लोकोत्तरम् ॥
विप्रान् सार्थकपङ्क्तिपावनपदं धैर्याद्दरिद्रानपि
स्वस्वाचारममुञ्चतो धनयशोलाभेऽपि तीव्रव्रतान् ॥ ४ ॥

यत्रस्थास्त्रुटिता अपि द्विजवरा देशान्तरे निर्गता
विद्याचारविवेकधैर्यविनयानन्याधिकं बिभ्रते ॥
नो वा स्वाधमजातिजातमनुजैर्यौनादिसंबन्धनं
लोभाद्यैरपि कुर्वतेऽतिविपदो मौलाः कुलीनप्रियाः ॥ ५ ॥

यज्जाताः शिरनेतिवंशमणयः सत्क्रियाः पङ्क्तिजा
नो देशान्तरजातभूसुरवरस्पृष्टान्नपानादिकम् ॥
विस्रब्धं परिगृह्णते तदुचिताचाराद्यबोधाद् भयाद्
धर्मस्यापि, समस्तभूपरिसरे सा किं पवित्रा न भूः ॥ ६ ॥

तत्रत्योत्तमविप्रवंशतिलकः प्राग्जन्मपुण्यावलीं
लोकेषु प्रथयन् निजां समजनि श्रद्धालुमुख्यः श्रुतौ ॥
मेधावान् धृतिमान् विवेककुशलः सद्धर्मभीरुः सदा-
चारादच्युतचित्तवृत्तिरनिशं सत्तत्त्वचिन्तारतः ॥ ७ ॥

बाल्येऽप्यस्य मनो न चञ्चलतरं नो वा कठोरान्तरा
वाग् दृष्टिश्चटुला रसादिविषये लोभस्य लेशः क्व चित् ॥
तारुण्येऽपि शमप्रधानममलं चित्तं न चित्रं तु तत्
सर्वं प्राक्तनपुण्यवैभववशात् किंकिं न संभाव्यते ॥ ८ ॥

यद्यप्यस्य विवेकवैभववशाद् रागान् नलोभादिना
गार्हस्थ्येऽभिरतिस् तथापि जननीतातानुरोधादसौ ॥
गार्हस्थ्योचितदानदेवयजनादीन् शास्त्रविध्यादृतान्
द्वात्रिंशच्छरदश्चकार विधिवत् सद्धर्मशास्त्रप्रियः ॥ ९ ॥

उत्पाद्यात्मजमेकमेष गृहिणीं संतोष्य वाग्भिर्महा-
वाक्यार्थप्रवणाभिरात्मनिरतश्रीयाज्ञवल्क्योपमः ॥
वैफल्यं कलयन् स्थितौ निजगृहे विक्षेपमप्यात्मन-
स्तत्त्वार्थावगतौ निरन्तरसमाधाने ततो निर्ययौ ॥ १० ॥

भूचन्द्राङ्ककलानिधानगणितेऽब्दे वैक्रमे कार्तिके
निर्गत्यैष पवित्रमूलफलभुक् क्षामः पदातिर्गृहात् ॥
तीर्थेष्वाप्लवनादिभिर्निजमनोवाक्कायसंशोधनं
वैधं पालयितुं प्रवृत्त इव संशुद्धोऽपि शिक्षां दिशन् ॥ ११ ॥

आदावात्मगृहान्तिकस्थसरयूमाप्लाव्य तत्तीरगे
साकेते स्थिरतामुपेत्य विधिना मासं प्रयागं ययौ ॥
तत्राप्युग्रतपोदृढव्रतमना भिक्षाप्तकन्दादिभुङ्
मासांस्त्रीन् विगमय्य रामचरितोऽयं चित्रकूटं ययौ ॥ १२ ॥

सम्यक् तत्र समस्ततत्तदवनीकालोचितं साधयन्
ब्रह्मावर्तमगाद् व्यतीत्य सुकृतं मासद्वयं क्षीरभुक् ॥
पूर्णं मासचतुष्टयं स्थिरमतिः कृच्छ्रादिभिर्वर्त्तयन्
गङ्गातीर उवास रामनिरतो वाल्मीकितुल्यो वशी ॥ १३ ॥

एवं पुष्करमुख्यतीर्थनिवहान् संप्राप्य पद्भ्यां क्रमात्
तत्तत्तीर्थवरोचितानि विधिवत् कर्माणि कृत्वा शनैः ॥
संप्रापद् बदरीवनं तदुचितं तीव्रं तपः संचरन्
षण्मासं स्थिरधीरुवास विजनेऽयं शाकपत्त्राशनः ॥ १४ ॥

तस्मादप्यतिपावनान्निरगमत् प्राप्तुं स लोकोत्तरं
मध्येमार्गमुपास्य पूर्णविधिना तीर्थानि गच्छन् कृती ॥
प्रापत् पूर्वपयोनिधेस्तटगतं नीलाचलं वत्सरं
सावित्रीं प्रजपन्नुवास विधिना तत्रापि शाकाशनः ॥ १५ ॥

एवं हायनपञ्चकेन विधिवत्तीर्थान्युपास्यात्मन-
स्तातादेः पितृलोकपोषणकरान् पिण्डान् गयादौ ददत् ॥
प्रापच्छ्रीमदनान्तकस्य नगरीं वाराणसीं यां श्रुति-
र्व्याचष्टे शिवरूपिणीं सुरनदीपूराविमुक्तां सदा ॥ १६ ॥

काशीरुद्रतनूः शिवा विसलति ज्ञानं यया देहिना-
मित्युक्तं निगमे किमन्यदधिकं वक्तुं क्षमः स्याज्जनः ॥
यत्र प्राणवियोगकालजपरब्रह्मोपदेशाच्छिवः
कीटादीनपि साधनैर्विरहितान् मुक्तान् करोतीत्यपि ॥ १७ ॥

स्थित्वा यत्र दिनत्रयं विधिवशात् कुत्रापि जीवो मृतः
स्यात् सोऽप्यत्र परत्र जन्मनि ततो मृत्वा भवेन् मुक्तिभाक् ॥
पुर्यो यद्यपि सप्त मुक्तिफलदा अन्या अयोध्यादयः
प्रापय्यात्र विमुक्तिदा न तु पुनः स्वातन्त्र्यतः प्राणिनाम् ॥ १८ ॥

येऽप्येनामनपेक्ष्य मुक्तिजनकास्तीर्थाः प्रयागादय-
स्ते सर्वे निवसन्ति पञ्चदशभिः स्वाभिः कलाभिस्त्विह ॥
स्वस्थाने कलयैकयेत्थमखिला रामेश्वराद्यास्सुरा
नद्यः पुण्यतमाः सरांसि मुनयः सिद्धादयः सागराः ॥ १९ ॥

अद्याप्यत्र निवासिनो बुधवराः संन्यासिनः कारवो
दासाद्या वणिजः कुकर्मनिरता धूर्ता विटा दाम्भिकाः ॥
वैद्यास्तन्त्रविशारदाः कविवरा देवप्रिया याज्ञिकाः
स्वेस्वे कर्मणि देवतुल्यमतयो दृश्यन्त एव स्फुटम् ॥ २० ॥

इत्याद्युक्तं स्कन्दमुख्यैः पुराणै-
र्देवप्रष्ठैर्व्यासमुख्यैर्मुनीन्द्रैः ॥
यत्तत्र स्यान्नो विवादः कुशाग्र-
बुद्ध्यात्रत्यं पश्यतां वस्तु सर्वम् ॥ २१ ॥

तत्तत्सङ्गात्तत्तदूहां वितत्य
सर्वेषां या तत्तदज्ञानहन्त्री ॥
तत्तज्ज्ञानात् प्राणिनां शं विधत्ते
सा किं काशी नो शिवा शान्तमास्तु ॥ २२ ॥

तत्तद्वस्त्वज्ञानदुःखे निमग्नं
जीवं बद्धं तत्रतत्रामनन्ति ॥
एवं तत्तद्वस्तुतत्त्वावबोध-
सौख्यं तत्तन्मुक्तिरूपं प्रसिद्धम् ॥ २३ ॥

वस्तूनां यस्तत्त्वबोधः समेषाम्
पूर्णं ज्ञानं निर्विशेषं स मोक्षः ॥
तत्संसिद्धिः काशिवासाद् ध्रुवं स्या-
दित्येषा सत्सङ्गतो मोक्षदात्री ॥ २४ ॥

एतेनोक्तं पापिनां काशिकैषा
तुल्या ज्ञेया कीकटेनेति यत्तत् ॥
युक्तं यस्माद् वस्तुतत्त्वानभिज्ञ-
ग्रावादीनां काशिवासान्न मुक्तिः ॥ २५ ॥

मृद्ग्रावादिव्यूहरूपा न काशी
किं तु ज्ञानव्यूहरूपैव सेष्टा ॥
नो चेत् सर्वा ज्ञानिनां काशिका भू-
रित्याद्युक्तं नैगमं नो घटेत ॥ २६ ॥

देशाशादेः पूर्वतावा उपाधा-
वारोप्यन्ते मृज्जलाद्येषु धर्माः ॥
एवं तत्त्वाज्ञाननाशादुपाधौ
काशीत्वादि प्रस्तरादौ प्रसिद्धम् ॥ २७ ॥

तत्तद्वस्तूत्कृष्टमर्मज्ञसङ्गात्
तत्तत्तत्त्वं ज्ञायते काशिवासात् ॥
एवं सर्वाज्ञाननाशात् क्रमेण
मुक्तिः सिद्धा नात्र किं चित् परोक्षम् ॥ २८ ॥

येषां पक्षे बुद्धिवृत्तिप्रवाह-
रोधो मोक्षो बुद्धिनाशोऽथ वा सः ॥
तेषां योगे कापिलादौ स्थिताना-
मप्येषा स्यान् मुक्तिदात्रीति सिद्धम् ॥ २९ ॥

सर्वेषां स्वज्ञानगम्ये प्रसिद्धा
बुद्धेर्वृत्तिर्धीमतां पामराणाम् ॥
एवं वस्त्वाकस्मिकं बुद्ध्यगम्यम्
दृष्ट्वा बुद्धेर्नाशरोधौ प्रसिद्धौ ॥ ३० ॥

काशीस्थेष्वाकस्मिकत्वावबोधः
सूक्ष्मं वस्तुष्वीक्षमाणस्य न स्यात् ॥
कस्य क्वापीत्यस्य संभावनैव
नास्तीत्येषा तन्मते मोक्षदात्री ॥ ३१ ॥

दिनत्रयं य स्थितिमत्र लब्ध्वा
देशान्तरं निर्गतवान् मनुष्यः ॥
अत्रत्यवस्तूनि स यावदायु-
र्न विस्मरेदन्यविलक्षणत्वात् ॥ ३२ ॥

ततः शरीरच्युतिकालजेन
दृढानुरागेण लभेत शाश्यास् ॥
उत्पत्तिमत्रत्यजनस्य तु प्राक्
प्रदर्शितैवाशुविमुक्तिरीतिः ॥ ३३ ॥

आकर्ण्य काशीमहिमानमत्र
समागतः प्राणवियोगकाले ॥
यद्वा निजात्युत्कटपुण्यराशे-
रामुष्मिकात् प्राप्त इहैहिकाद् वा ॥ ३४ ॥

कथं चिदप्यत्र समागतस्य
प्राणान्तकालेऽखिलवस्तुतत्त्वम् ॥
प्रागुक्तरीत्या स्मरतो विमुक्ति-
र्युक्ता न चित्रास्पदतामुपैति ॥ ३५ ॥

दृढानुरागेण निजेष्टहेतू-
नन्यान् समासादयते क्रमेण ॥
ततस्तु सर्वेष्टनिदानमुख्यो
दृढानुरागः पुरुषस्य सिद्धः ॥ ३६ ॥

मनःप्रभृत्यान्तरसूक्ष्मदेहात्
स्थूलस्य देहस्य वियोग इष्टः ॥
प्राणोत्क्रमो नाम न चित्तवृत्ति-
नाशादिरिष्येत तदापि धीरैः ॥ ३७ ॥

एवं तु देहावसितेः क्षणेऽयं
यं भावमुत्कः स्मरति प्रकर्षात् ॥
जीवस्तदाप्तेरनुकूलदेहा-
न्याप्नोति रागादिति सुप्रसिद्धम् ॥ ३८ ॥

काश्यां शरीरं जहतो जनस्या-
त्रत्येषु वस्तुष्वनुरागवृद्धिः ॥
तत्तत्त्वबोधाय भवेदवश्यं
तदेत्युपर्युक्तदिशा स मुक्तः ॥ ३९ ॥

एवं प्रयागादिषु सर्वतीर्था-
दिषूहनीयं स्वधिया यथेष्टम् ॥
यथासमावेशमिहत्यजन्मा-
न्तरस्थमुक्त्यादिनिमित्ततादि ॥ ४० ॥

गङ्गाजलं कायिकमानसादि-
शुद्धिप्रदं सर्वजनप्रसिद्धम् ॥
तद् बुद्धिनैर्मल्यविधानहेतो-
र्मुक्तिं करोतीति वदन्ति सन्तः ॥ ४१ ॥

यः संध्ययोर्दैवनदीतटेऽत्र
स्नात्वा स्मरंस्तिष्ठति धीरचेताः ॥
तत्कालजं तस्य सुखं स एव
जानीत नान्योऽखिलवस्तुतत्त्वम् ॥ ४२ ॥

गङ्गाप्रवाहो यदि भारतेऽस्मिन्
न स्यात्तदैषोऽपि समोऽन्यदेशैः ॥
स्यादेव देशः पुनरेनयाऽयं
सर्वाधिकः सर्वमनोऽभिरामः ॥ ४३ ॥

सैषा न यां मुञ्चति धीरधारा
तत्स्थान् पदार्थानखिलान् पुनाना ॥
निजोर्मिसंसक्तमरुद्भिरस्याः
को मुक्तिदत्वे खलु संशयीत ॥ ४४ ॥

श्रीवैद्यनाथान्तिकवाटिकादि-
र्विविक्तसर्वर्तुसुखप्रदत्वात् ॥
आनन्दपूर्णत्ववनत्वमस्या
अद्यापि संदर्शयते विशेषात् ॥ ४५ ॥

गङ्गातटेऽत्युच्चविशालमत्र
केदारनाथोर्जितमन्दिरं यत् ॥
अद्यापि तत्रातुलतूर्यशब्द-
ब्रह्मापरोक्षं भवति प्रदोषे ॥ ४६ ॥

विश्वेशनीराजनदीपमाला-
ज्योतिर्मयं ब्रह्म निरीक्ष्यतेऽत्र ॥
नित्यं निशायाः प्रहरे द्वितीये
देवैर्मनुष्यैरिव सेव्यमानम् ॥ ४७ ॥

तटे जलादौ च सुरापगायाः
प्रत्यब्दमावेदयते पुरोऽस्याः ॥
दीपावली कार्तिकपञ्चदश्यो-
र्ज्योतिर्मयत्वं निगमादिषूक्तम् ॥ ४८ ॥

स्याद् यद्यपीहत्यसमस्तवस्तु-
तत्त्वं गिरा बोधयितुं समर्थः ॥
कश्चित् तथापीक्षणसार्थकत्व-
मभीप्सुभिर्दृश्यतमा पुरीयम् ॥ ४९ ॥

एतादृशीं मुक्तिपुरीं विहातुं
गङ्गामराः सत्पुरुषादयश्च ॥
यन् नैव शक्ताः सहसा तदेषा-
ऽविमुक्तनाम्ना जगति प्रसिद्धा ॥ ५० ॥

सूर्योदयात् प्राग् निजकर्म कर्तुं
गच्छन्ति शूद्रा अवगाह्य गङ्गाम् ॥
विश्वेश्वरादीन् परितोष्य देवान्
गङ्गाजलाद्यैरधुनापि यत्र ॥ ५१ ॥

ताम्बूलकारा दधिदुग्धभक्ष्य-
भोज्यादिविक्रेतृवराश्च यत्र ॥
स्वस्वापणस्थाः कमपि स्पृशन्ति
नैवाधुनोज्झन्त्यपि दूरतस्ते ॥ ५२ ॥

ताम्बूलवल्लीदलवीटिकादीन्
क्रेतुः करे तन्निहितान् पृथिव्याम् ॥
संगृह्णते गाङ्गजलेन सम्यक्
प्रक्षाल्य तन्मूल्यपणान् स्वभाण्डे ॥ ५३ ॥

प्राप्यात्र गङ्गामणिकर्णिकादि-
स्नानादिकांस्तीर्थविधीन् समाप्य ॥
मासत्रयेणात्र निवासमैच्छच्
छरीरपातावधिकं स धीमान् ॥ ५४ ॥

अथ क्रमेणामलचित्तवृत्ति-
राहारशुद्ध्या तपसा जपाद्यैः ॥
निजैहिकामुष्मिकदुःखमूलं
समूलघातं स विहन्तुमैच्छत् ॥ ५५ ॥

तत्कारणान्वेष धिया विचिन्वन्
वैराग्यमेवाजगणत् पुरस्तात् ॥
विवेकिनो दुःखकराः समस्ता-
स्तापादिदुःखैर्विषया यदेते ॥ ५६ ॥

वेगाल्लघोस्तीव्रतराद् यथा वा
दोला विधावत्युभयत्र पार्श्वे ॥
तद्वेगवृद्ध्यादिकमेकपार्श्वे-
ऽसंभाव्यमिच्छन् न भवेत् कृतार्थः ॥ ५७ ॥

तथा समस्ता विषयाः समेन
सुखेन दुःखेन च पूर्यमाणाः ॥
तत्रैकवृद्धिं मनुजोऽन्यहानि-
मिच्छन् कृतार्थो भविता कथं सः ॥ ५८ ॥

यत्नात् सुखं वर्द्धयितुं स्वकीयं
जनोऽभिलष्यत्यनिशं सुतादीन् ॥
सहैव दुःखस्य सुखेन वृद्धौ
पश्चात् स्वमौढ्यात् परितापमेति ॥ ५९ ॥

एवं सुखादिष्वनिशं विमूढाः
सुखेच्छयाताननुधावमानाः ॥
क्लिश्यन्ति तत्त्यागनिगूढमार्गा-
ज्ञानादशक्ताः सहसा विहातुम् ॥ ६० ॥

वस्त्वन्तरस्य ग्रहणं विना स्यात्
त्यागः कथंकारमशेषभावे ॥
सदानुरक्तं मनुजस्य चित्त-
मेकान्ततो निर्विषयं कथं स्यात् ॥ ६१ ॥

इदं न वाच्यं यत आत्मनिष्ठो
जनस्य चेतःपरिणाम आस्ते ॥
सदैव तत्तद्विषयत्वबुद्धि-
र्भ्रान्तिस्तु लोकस्य निजात्मनि स्यात् ॥ ६२ ॥

रज्जुर्यथा सर्पधिया भ्रमेण
जनस्य चित्तेन पुरा गृहीता ॥
तद्भ्रान्तिनाशे भुजगत्वमस्यां
मतौ भवेन् नो विषयः कदा चित् ॥ ६३ ॥

अस्या न वस्त्वन्तरगोचरत्वं
किं त्वात्तसर्पादिविमोषमात्रे ॥
सत्यप्यमुष्यां विषयः पुरासीद्
यो रज्जुभागः स पुनस्तथास्ते ॥ ६४ ॥

घटादिबुद्धावपि तद्वदेव
विशेष्यता स्वात्मन एव नित्यम् ॥
भ्रान्त्या तु तत्तद्विषयावभासो
विशेषणत्वेन विभिन्नरूपः ॥ ६५ ॥

ततस्तु तत्तद्विषयप्रमोष-
मात्रेण तस्या विषयो निजात्मा ॥
वस्त्वन्तरस्याग्रहणेऽपि सिद्धः
शेषान् न वा निर्विषयत्वमस्याः ॥ ६६ ॥

यद्वा सुषुप्त्यादिनिदर्शनेन
धीसंततिर्निर्विषया कदा चित् ॥
स्फुरेत् कदा चिद् विषयानुरक्ते-
त्येवं सुधीभिः परिकल्पनीयम् ॥ ६७ ॥

एवं त्वशेषैर्विषयैर्वियुक्ता-
ऽप्येषा चिरं तिष्ठति निर्विशेषम् ॥
का वा क्षतिर्यद् विषयानुरागः
सदातनोऽस्यामुररीक्रियेत ॥ ६८ ॥

पूर्वत्र पक्षेऽखिलदुःखरूप-
घटादिमोषेऽपि सुखस्वरूपम् ॥
आत्मानमेषा विषयीकरोती-
त्येषा सुखैकाकृतिरिष्यते धीः ॥ ६९ ॥

सर्वोऽपि जन्तुः शयनं विना नो
जीवत्यदः कामयते च सर्वः ॥
सुप्तोत्थितस्तत्समयस्य सौख्यं
सर्वः स्मरत्यत्र च नो विवादः ॥ ७० ॥

श्रान्त्या महत्या परिखेदितोऽपि
रुजापि शोकादिपराहतोऽपि ॥
सुप्त्वा मतौ स्थूलशरीरकेऽपि
स्वस्थत्वमाप्नोत्यखिलो हि जन्तुः ॥ ७१ ॥

तदा तु नासीद् विषयस्य बुद्धिः
कस्यापि सौख्यं तु कुतस्तदीयम् ॥
तस्मात् तदा धीविषयो य आत्मा
सुखस्वरूपः स सदाभ्युपेयः ॥ ७२ ॥

यस्मै प्रयत्नः सकलोऽपि यच् च
नान्यार्थमेतत् सुखचिह्नमिष्टम् ॥
आत्मन्यदः संघटते सदैवे-
त्ययं सुखात्मा सकलाभ्युपेतः ॥ ७३ ॥

अन्यानधीनप्रियतास्पदत्वं
सुखातिरिक्ते न कदापि दृष्टम् ॥
आत्मन्यदः कस्य भवेन् न जन्तो-
स्तस्मादसौ सौख्यमयोऽभ्युपेयः ॥ ७४ ॥

तत्त्वं तु सर्वापि मतिर्विशेष्य-
प्रकारताभ्यां विषयीकरोति ॥
चैतन्यजाड्ये सुखदुःखरूपे
तत्रान्त्यबाधे प्रथमस्य शेषः ॥ ७५ ॥

सर्वत्र शेषी चितिरूप एक-
रसः प्रकारस्तु घटादिरूपः ॥
जड़ो विभिन्नश्चितिमात्रशेषे
ज्ञाने तदा त्वेकरसत्वसिद्धिः ॥ ७६ ॥

परत्र पक्षे तु निजात्मरूपं
सुखं प्रकाशेत न सर्वबुद्धौ ॥
किं तु स्वरूपेण घटादिरेव
जड़ोऽप्यनित्यः सुखदुःखरूपः ॥ ७७ ॥

कालादिभेदात् सुखदुःखते द्वे
प्रत्यक्षसिद्धे न परस्परं ते ॥
विरुद्ध एकत्र घटादिभावे
सम्यङ् निविष्टे इति तस्य तत्त्वम् ॥ ७८ ॥

घटादिबाधे तु सुखावशेषः
संभाव्यते यद्यपि नो तथापि ॥
घटादिदुःखांशविनाशमात्रं
सुखस्वरूपं परिकल्पनीयम् ॥ ७९ ॥

लोकेऽपि घर्मादिपराहतस्य
ततस्तरुच्छायमुपागतस्य ॥
सुखीति बुद्धा न सुखादिरूप-
भावद्वयावश्यकतेति तत्त्वम् ॥ ८० ॥

पक्षद्वयेऽप्युक्तधियः सदैव
हिताहितौ यद्यपि गोचरौ स्तः ॥
तथापि दुःखस्य जिहासितत्वात्
तद्धानिरिष्टा मनुजस्य नित्यम् ॥ ८१ ॥

यद्यप्यमुख्या विषयो हितोऽपी-
त्युक्ता जिहासा न घटेत तस्याः ॥
किं तु प्रतीपं सुखगोचरत्वात्
तामप्युपादित्सुरसौ जनः स्यात् ॥ ८२ ॥

तथापि योऽस्यां सुखभाग एष
दुःखांशनाशोऽपि न नाशमेता ॥
इत्थं विनिश्चित्य न को यतेत
दुःखांशनाशे सततं विवेकी ॥ ८३ ॥

यद्यप्यमुष्या विषये घटादौ
नष्टे तदीयं सुखमप्यवश्यम् ॥
नंष्टेति दुःखेन सहैव तस्या
युक्ता जिहासा न परत्र पक्षे ॥ ८४ ॥

तथापि दुःखांशविनाशरूपं
नित्यं सुखं कामयते जनो यः ॥
दुःखानुषक्तं नियतं विनाशि
घटादिसौख्यं मतमस्य न स्यात् ॥ ८५ ॥

यद्वा घटाद्यात्मकसौख्यदुःख-
बाधात्मकं सर्वघटादिसौख्यात् ॥
विलक्षणं नित्यमशेषदुःखा-
संसृष्टमस्तीति नृणामभीष्टम् ॥ ८६ ॥

दुःखानुषङ्गस्तु सुखे जिहासा-
हेतुर्मतः पक्षयुगे समानः ॥
पयःसिताभ्यामुपसिक्तमन्नं
को ना विषस्पृष्टमुपाददीत ॥ ८७ ॥
लोकेऽपि यत् स्यात् प्रतिकूलमेत-
ल्लेशोऽपि सह्यो न भवेत् स्वभावात् ॥
यत् स्यात् तु पुंसामनुकूलमेत-
द्राशौ न संतोष इति प्रसिद्धम् ॥ ८८ ॥
दुःखक्षणः कल्पसमो जनानां
क्षणोपमो भाति सुखस्य कल्पः ॥
सुखाम्बुधौ दुःखलवानुषक्ते
लक्ष्येत दुःखं न सुखं स्वभावात् ॥ ८९ ॥
भोज्ये जनः स्वादुरसे सुपक्के
घृताप्लुते क्षीरसितादियुक्ते ॥
अमेध्यलेशं पतितं समीक्ष्य
नापेक्षते भोज्यगुणान् विपश्चित् ॥ ९० ॥
एवं घटादौ विषये सुखस्य
भागेऽधिके दुःखलवात् समे वा ॥
दुःखस्य योगात् परिणामदर्शी
नैवानुरज्येत कदापि विद्वान् ॥ ९१ ॥
किं चानुरागो विषयेषु योऽयं
निजं सुखं वर्द्धयितुं स नूनम् ॥
यद्वा लघूकर्त्तुमथ स्वदुःखं
समूलमुन्मूलयितुं किलेष्टः ॥ ९२ ॥

आद्ये न कश्चिद् विषयाभिवृद्ध्या
निजं सुखं वर्द्धयितुं समर्थः ॥
यतः सुखेनैव सहाभिवृद्धिः
स्थिरीकृता दुःखमहार्णवस्य ॥ ९३ ॥

या युक्तिरुक्ता प्रथमे घटादि-
सुखे जिह्वासाङ्कुरवृद्धिहेतुः ॥
सैवावसेयाग्रिमतत्समान-
सुखेष्वनिष्टत्वमतेर् निदानम् ॥ ९४ ॥

लोकेऽपि कश्चिन् न निजानभीष्ट-
बन्धादिहेतौ सुखसाधनेऽपि ॥
प्रवर्त्तते निन्दितसाहसादौ
यो राजनीतिं श्रुतवान् कदापि ॥ ९५ ॥

श्रुत्वापि नीतिं पुनरीदृशानि
करोति कर्माणि विनिश्चिनोति ॥
प्राक् कोऽपि बन्धुं पुरुषो न शक्तः
पलायमानं भवितेति मां सः ॥ ९६ ॥

यद् वा सुखं स्याद् बहु साहसादि-
जन्यं भवेदल्पतरं तु दुःखम् ॥
बन्धादिजन्यं त्विति निश्चिनोति
ततः प्रवर्तेत विनिन्दितेऽसौ ॥ ९७ ॥

पलायमानोऽपि भवेत् सुबद्धो
दुःखं बहु स्यादपि बन्धजन्यम् ॥
स्तेयादिसौख्यादिति चान्यवार्त्ता
प्रवृत्तिरेतस्य तु तद्धियैव ॥ ९८ ॥

यथा प्रमा कर्मसु कर्मजालात्
प्रवर्तयेच् चैव निवर्तयेच् च ॥
नरं प्रवृत्त्यादिकरत्वमेवं
भ्रमे प्रसिद्धं कतमो ब्रुवीत ॥ ९९ ॥

यद् वा निषिद्धेऽपि नृणां प्रवृत्ती
रागादिसंमूढधियां घटेत ॥
यतोऽन्धबुद्धिः प्रतिघादिभिर् यस्
तस्यानुशीतिर् न भवेद् वधादेः ॥ १०० ॥

यद् वानभिज्ञो नृपनीतिजाल-
स्यापि प्रवर्तेत जनश् चुरादौ ॥
दुःखप्रदत्वेन न कर्म तेन
तज् ज्ञातमित्येष शिशूपमानः ॥ १०१ ॥

बालोपमोऽज्ञानवशान् मनुष्यः
क्रोधादिमौढ्यादथ वा भ्रमादेः ॥
स्तेयादिकं यः कुरुते स पश्चाद्
दुःखातिरेकात् परितापमेति ॥ १०२ ॥

अतो महीपोहितनीतिमार्ग-
मावश्यकं सत्पुरुषा विदित्वा ॥
विविच्य दुःखाभिमतस्य मात्रां
तत्तत्क्रियास्वन्तदृशो यतन्ते ॥ १०३ ॥

एवं तु कश् चित् पुरुषो विवेकी
विद्वान् स्वकीयेष्टविवृद्धिबुद्ध्या ॥
अनिष्टपूर्णे विषये घटादौ
न नश्वरे सूक्ष्ममतिर् यतेत ॥ १०४ ॥

भ्रान्तः स्वकीयेष्टनिजानभीष्ट-
मात्राविवेके प्रतिघादिमूढः ॥
अज्ञोऽथ वा यो विषयाभिवृद्धौ
यतेत तस्येर्त्सति दुःखमेव ॥ १०५ ॥

सुखाभिवृद्धावपि दुःखसङ्ग-
विनश्वरत्वादिविचारकर्तुः ॥
जिहासितं स्याद् विषयस्य सौख्य-
मित्युक्तमूर्द्धं पुनरत्र बोध्यम् ॥ १०६ ॥

का वा विवृद्धिर् विषये सुखानां
यतः क्रमेणैव भवन्ति भावाः ॥
धीगोचरास् तन् न पुरात्तसौख्य-
मोषं विनाऽपूर्वसुखग्रहः स्यात् ॥ १०७ ॥

प्रेमास्पदत्वं सुखलक्षणं स्यात्
तत्तत्सुखे तत् तु समानमेव ॥
तत्रेदमुत्कृष्टमदो निकृष्टं
सुखं वचोऽहेतुकमित्ययुक्तम् ॥ १०८ ॥

संख्याकृतं चेद् विषयोत्थसौख्या-
धिक्यं मतं तस्य न संभवोऽस्ति ॥
अनादिसंसारसुखानि जीव-
भुक्तानि को वा गणयेत् समर्थः ॥ १०९ ॥

न्यूनाधिकत्वाद्यनुरागनिष्ठं
वक्तुं न शक्यं गुरुणापि यस्मात् ॥
ततस् तु तुल्यं सकलं घटादि-
सुखं विमृश्यात्र न सज्जते ज्ञः ॥ ११० ॥

वर्षासु सौख्यं शिशिरे तु दुःखं
वृष्टिः समानैव ददाति येभ्यः ॥
सुखादिमात्राधिकतादिबुद्धिः
कालाद्युपाधेः परिकल्पितैभिः ॥ १११ ॥

कश्मीरदेशोऽधिकसौख्यदायि
वासः सदोर्णामयमन्यदेशे ॥
तथा न तत्रापि सुखादिमात्रा
देशाद्युपाधेः परिकल्प्यतेऽन्या ॥ ११२ ॥

श्लेष्मप्रधानं सुखयेन् मनुष्यं
तद् दुःखयेदार्द्रकमुग्रपित्तम् ॥
तत्रापि पित्ताधिकताद्युपाधेर्
दुःखादिमात्राधिकतादिरिष्टः ॥ ११३ ॥

ततस् तु न क्वापि सुखादिमात्रा-
धिक्यादि तत्तद्विषयप्रयुक्तम् ॥
लोकावबोधस् तु निजभ्रमेणे-
त्यास्थेयमेतन् मतिमत्प्रधानैः ॥ ११४ ॥

भ्रमप्रयुक्ताप्यवलोकितैव
लोके महाव्यापृतिरज्ञजन्तोः ॥
क्लेशावहा स्वस्य निरर्थिका च
पतङ्गमीनद्विपमूषकादेः ॥ ११५ ॥

अतिप्रयत्नेन पतन्ति दीपे
पतङ्गमाला निजनाशहेतौ ॥
एवं मुखेनाददते झषाः स्व-
नाशस्य बीजं बडिशं प्रयत्नात् ॥ ११६ ॥

काष्ठादिजेभीमवलोक्य गर्त्तं
पतन्ति नागा निजबन्धहेतौ ॥
निजप्रयत्नत्रुटिताहिपेटी-
स्थाह्यास्यमागच्छति मूषकोऽपि ॥ ११७ ॥

देशान्तरीयो लघुमूषकोऽपि
चक्रे शलाकाकृत ऊर्द्धगत्यै ॥
शुक्रस्थलो धावति घण्टिकाग्र-
स्पृष्टे शलाकावृतपञ्जरस्थः ॥ ११८ ॥

बंभ्रम्यमाणो न कदाप्युपैति
गोले शलाकाद्वय एव तिष्ठन् ॥
तावच्छलाकापरपूर्वगोऽणु-
मात्रं फलं भ्राम्यति तु भ्रमेण ॥ ११९ ॥

जनास् तु चाञ्चल्यममुष्य दृष्ट्वा
श्रुत्वा च शब्दं लघुघण्टिकायाः ॥
तं पालयन्त्यात्मसुखाभिवृद्धौ
स्वव्यापृतौ तत्तुलनानभिज्ञाः ॥ १२० ॥

तत्तत्कलाभिज्ञजनेष्वनन्ते-
ष्वूर्द्धं कियद्गोऽध इतः कियद्गः ॥
बलात् प्रयत्नेऽपि कृते सदैव
स्थास्यत्ययं जीव इति प्रसिद्धम् ॥ १२१ ॥

ततस् तु योऽयं विषये प्रयत्नस्
तद्वृद्धिकामैः क्रियते मनुष्यैः ॥
सोऽयं वृथैवेति विमृश्य धीमांस्
ततो विरज्येत यथार्थबुद्धिः ॥ १२२ ॥

किं चेत्तते यो विषयान् समस्ता-
नतिप्रयत्नेन धृतान् सदैव ॥
विनश्यतः को न निजेच्छया तांस्
त्यजेद् य इच्छेदनुतापशान्तिम् ॥ १२३ ॥

सूनागतोऽजोऽपि न भोजनादौ
प्रवर्तते निश्चितमृत्युबुद्धिः ॥
निश्चित्य मृत्युं यतते मनुष्यः
पापेष्वपीतो न विचित्रमन्यत् ॥ १२४ ॥

त्यागे स्थिरे यस् त्यजति स्वयं स
आनन्दमाप्नोति यशोऽपि लोके ॥
अनिच्छतो यस्य पदार्थमन्य
आच्छिन्द्युरेषोऽनुतपेदकीर्तिः ॥ १२५ ॥

निजेच्छयाशु त्यजने तदीयं
सुखं विनश्येद् गिरिशेच्छया तु ॥
यदा भवेत् तत्त्यजनं तदन्तः
सुखं न नश्येदिति नैव शङ्क्यम् ॥ १२६ ॥

यतो घटादौ विषये सुखं यत्
तन् नेष्यमाणं त्विति निश्चितं प्राक् ॥
ततस् तु तावद् विषयोत्थदुःख-
जिहासयाशु त्यजनं मतं स्यात् ॥ १२७ ॥

किं चेयमूरीक्रियतां प्रवृत्तिर्
जनस्य नो सौख्यविवृत्सयैव ॥
किं तु स्वभावात् परिवर्तनेच्छा
सर्वत्र सिद्धैव सुखेऽपि योज्या ॥ १२८ ॥

अश्नन् नपूपादिमहार्हवस्तू-
न्यत्यन्ततृप्तो मधुरादिना यः ॥
स तद्रसादेः परिवर्त्तनाय
तिक्तादि वाञ्छेदिति लोकसिद्धम् ॥ १२९ ॥

प्राप्तेषु सर्वस्य भवेज् जिहासा-
ऽप्राप्तेषु भावेषु जिघृक्षितत्वम् ॥
लोकस्वभावात् परिदृष्टमेवे-
त्यस्मात् सुखे नोत्तमतादि कल्प्यम् ॥ १३० ॥

तीव्रानुरागः सुरते सुभोज्ये
प्राग् यस्य तस्यैव कृते रतादौ ॥
नैवावशिष्येत जनस्य वाञ्छा-
लवः प्रतीपं समुदेति तापः ॥ १३१ ॥

नारीमयं यन्त्रमिदं नराणां
वीर्यप्रतापादिविचूषणाय ॥
विनिर्मितं तत्र जनो जुहोति
निजं बलादीति विचित्रमेतत् ॥ १३२ ॥

मेषीप्रपातान्धपरम्परां यो
विहाय लाभादि विमृश्य पश्येत् ॥
किं वा सुखं तस्य रतप्रसङ्गे
दृश्येत दुःखाम्बुनिधौ प्रतीपम् ॥ १३३ ॥

वाञ्छातिरेकोद्भवदुःखमादौ
श्रमातिरेकः सुरते प्रवृत्ते ॥
प्राणोत्क्रमो बिन्दुनिपातकाले
चान्ते महाग्लानिरुदेति तत्र ॥ १३४ ॥

पुत्रैषणाहेतुकमत्र लोक-
प्रवर्त्तनं स्यात् सुखमात्मजेन ॥
किं स्यान् नरस्येति विमृश्य बुद्ध्या
प्रवर्ततां नाम नरो हितार्थी ॥ १३५ ॥

गर्भाशयस्थे तनुजे सुखं यन्
मातुः प्रसूतेः समये च तस्य ॥
संरक्षणेऽप्यस्य शिशोस् तदेषा
जानीत नान्यस्य समक्षमेतत् ॥ १३६ ॥

दारेष्वनुत्तमचिरन्तनबद्धमूल-
रागातिरेकविकलस्य तदीयदुःखात् ॥
दुःखं पितुस् तनयरोदनकालजं यद्
वेत्त्वेष पुत्रसुखलाभसमुत्सुकस् तत् ॥ १३७ ॥

पुत्रस्य देहपरिपुष्टिमतिप्रकर्ष-
शिक्षाभिवृद्धिखलसङ्गनिवारणादौ ॥
संतोषलेशमनवाप्तवतोस् तयोस् तत्
सौख्यं न पर्वतधियामपि सुप्रसिद्धम् ॥ १३८ ॥

पुत्रस्य जातकरपीड़नसंस्कृतेः स्व-
दारापकृष्टमनसः क्रमशोऽनुरक्तेः ॥
स्वस्मिन् क्षतिं समवलोकयतोस् तयोः स्याद्
दुःखं स्वरागमपहर्तुमशक्तयोस् तु ॥ १३९ ॥

परस्परं रागनिमित्तकं यत्
सुखं समुत्पद्यत एकरागे ॥
नष्टेऽन्यदीये तु समेऽधिके वा
रागे तयोरेव स दुःखदः स्यात् ॥ १४० ॥

रागप्रणाली मनुजस्य नित्य-
मेकैव मुख्या इतरास् तु गौण्यः ॥
तत्रैकतस् तत्परिवर्तने तु
तत्र क्षतिस् तस्य भवेदवश्यम् ॥ १४१ ॥

जराभिभूतस्य करिष्यतेऽयं
सेवामितीष्टस् तनुजो जनानाम् ॥
वैरी मृतो वा भवितेति तुल्यां
संभावनां किं न करोति जन्तुः ॥ १४२ ॥

सर्वेऽपि कस्यापि सुता अवश्यं
तेषां कियन्तः परिचारकाः स्युः ॥
पित्रोर् द्विषो वा तनयाः कियन्तो-
ऽधिकस्य संभावनमत्र योग्यम् ॥ १४३ ॥

कीटाः पतङ्गाः पशवो मृगाद्याः
पुत्रा न कस्यापि भवन्ति किं वा ॥
अनन्तसंख्याः कतमस् तु तेषां
तातादिसेवानिरतः प्रसिद्धः ॥ १४४ ॥

न सेवकत्वं तनयत्वधर्म-
व्याप्यं मतं यद् धनुमत्खगेन्द्रौ ॥
नन्द्यादयोऽन्यस्य जगत्प्रसिद्धाः
संसेवकाः सत्यपि तातमुख्ये ॥ १४५ ॥

को वा समर्थो निजवीर्यदर्प-
शाली समीहेत सुतादिसेवाम् ॥
कदाप्यशक्तौ तनुजादिसेवा-
मालोक्य किं संकुचितो न दुःखी ॥ १४६ ॥

सेवारतः स्याद् यदि कोऽपि तस्य
त्यागः सुतादेरतिदुःखदः स्यात् ॥
प्राणान्तकाले निजदेहनाशा-
दित्यादि जानन्ति न मानवाः किम् ॥ १४७ ॥

स्वर्गप्रभृत्यूर्द्धगतिर् मनुष्यैर्
नावाप्यते चेत् तनयादिहीनैः ॥
इत्यादिकाच् छ्रौतपुराणमुख्य-
वाक्यात् सुतादौ समुदेति वाञ्छा ॥ १४८ ॥

आलोड्यतां तर्हि धिया श्रुतीनां
वचांसि तद्वत् स्मृतिभारतादेः ॥
व्याघातदोषो न परस्परं स्या-
देषां यथेत्थं तु निगूढतत्त्वम् ॥ १४९ ॥

एकत्र पुत्रस्य गतिप्रदत्व-
मन्यत्र तत्कर्तृकपिण्डदाने ॥
तत्कर्तृके वाजिमखे गयादि-
पिण्डे वृषोत्सर्गसपिण्डनादौ ॥ १५० ॥

परत्र दृष्टं निजकर्तृकेषु
पुराणपाठादिषु काशिकादौ ॥
वासादिषूत्कृष्टगतिप्रदत्व-
मन्यत्र गङ्गादितटादिवासे ॥ १५१ ॥

विष्ण्वादिदेवापचितौ परत्रा-
ग्निष्टोममुख्येऽपि मखे परत्र ॥
तीर्थाटनेऽन्यत्र परत्र मन्त्र-
जपे व्रतादौ तपसि स्मृतं तत् ॥ १५२ ॥

तत्तत्प्रतिष्ठापकतत्तदुक्त-
वाक्येषु विस्पष्टतरं निरुक्तम् ॥
स्वोक्तान्यकर्मस्वगतिप्रदत्व-
मन्यत्र तद्वातृतयोदितेषु ॥ १५३ ॥
तृणारणिन्यायबलेन चैषां
चेद् धेतुताऽभीष्टतमा समेषाम् ॥
स्वर्गादिकं प्रत्यपि सा न युक्ता
वचोविरोधस्य दुरुद्धरत्वात् ॥ १५४ ॥
किं चात्मजाद्यैः पितृनाकहेतोर्
न्युप्येत पिण्डो दशगात्रमुख्यः ॥
ततस् तु काश्यादिमृतस्य कस्माद्
दाहादिकं तत्तनुजैः क्रियेत ॥ १५५ ॥
एवं गयादौ मनुजेन येन
कृतं पितृश्राद्धमसौ न कुर्यात् ॥
प्रत्यब्दमेतस्य यतो विमुक्तिर्
दृढैव शास्त्रप्रतिपादितास्ति ॥ १५६ ॥
तस्माद् वचःसूक्तपुराणमुख्य-
प्रतिष्ठितेषूक्तफलानि यानि ॥
प्ररोचकान्येव न तत्त्वबुद्ध्या
संयोजनीयानि पवित्रधीभिः ॥ १५७ ॥
ततस् तु सर्वेऽपि सुतादिजन्म-
प्रवर्त्तका ये विधयोऽत्र शास्त्रे ॥
नाप्राप्तसंप्रापकता तु तेषां
यतः प्रवृत्तिः प्रथितैव तत्र ॥ १५८ ॥

विधिप्रयुक्ता यदि मानवस्य
प्रवृत्तिरिष्येत तनूद्भवादौ ॥
शास्त्रानभिज्ञाः पशुशृगालमुख्याः
कथं प्रवृत्ता अधिकं नरेभ्यः ॥ १५९ ॥

तस्माद् यथा कूर्मशशादिमांस-
भुक्तेर् विधानं परिसंख्ययैव ॥
दोषाधिकत्वं तदुपात्तजन्तु-
भिन्नामिषे बोधयितुं प्रवृत्तम् ॥ १६० ॥

तथैव पुत्रादिजनुर्विधान-
परं वचो योजयितव्यमत्र ॥
रागात् प्रवृत्तेरुभयत्र सिद्धा-
वेको विधिर् नान्य इदं न युक्तम् ॥ १६१ ॥

अत्यन्तमप्राप्तपदार्थसार्थ-
प्रवर्तकत्वं जगति प्रसिद्धम् ॥
विधेरपूर्वस्य तु लक्षणं यत्
प्राप्तानुवादेऽत्र न तद् घटेत ॥ १६२ ॥

श्रौताद्यपूर्वविधिगोचरभक्तिमात्र-
हेतुप्रवृत्तिविषयत्वमभीष्टमेवम् ॥
धर्मस्य लक्षणमिदं न घटेत पुत्रा-
द्युत्पादनादिषु सदैव समीहितेषु ॥ १६३ ॥

मन्वादिमुन्यभिहितत्वबलादमीषां
कल्प्येत सूनुजनिदाररतादिकानाम् ॥
धर्मत्वमेवमपरेषु तदुक्तमूत्र-
त्यागादिकेष्वपि न किं परिकल्प्यते तत् ॥ १६४ ॥

आहारमैथुनभयादिशरीरधर्मा
धर्मा भवेयुर्ऋषिभिः कथितत्वमात्रात् ॥
सर्वेऽपि कीटपशुपक्षिसरीसृपाद्यास्
तत्रैव नित्यनिरता अतिधार्मिकाः स्युः ॥ १६५ ॥

यद् वेष्यतामपरलोकसुखप्रदत्वं
धर्मस्य लक्षणमदोऽपि न संघटेत ॥
पुत्रादिजन्मसुरतादिषु दृष्टसौख्य-
वृद्धिप्रदेषु परलोकसुखाप्रदत्वात् ॥ १६६ ॥

मीमांसकैरपि निरुक्तमिदं विचार्य
यत्रावलोकितमिहत्यसुखप्रदत्वम् ॥
तन् नापरत्र सुखदं परिकल्पनीयं
कर्मेति लाघवबलं समुपाददानैः ॥ १६७ ॥

रागप्रवृत्तिविषयेऽखिलदेहधर्मे
धर्मत्वमिष्टमभविष्यदिहैव लोके ॥
सौख्यप्रदे स्वपनभोजनमैथुनादौ
चित्रास्पदं किमभविष्यदितोऽपि जन्तोः ॥ १६८ ॥

तस्माद् विधायकवचांसि महर्षिधर्म-
शास्त्रे प्रतिष्ठिततमान्यथ वा पुराणे ॥
अन्यत्र वापि निगमादिषु तानि धीरैर्
योज्यानि नाक्षरपदार्थबलादमीषाम् ॥ १६९ ॥

मानत्वमप्यभिमतं नयनादिनिष्ठं
मानान्तरानधिगतावगमक्षमत्वम् ॥
स्याद् बोधयत्यखिललौकिकमानसिद्धां
लोकप्रवृत्तिमिह मापकता न शब्दे ॥ १७० ॥

यं कश्चिदेव विरलः पुरुषोऽत्र धर्म-
मीशीत साधयितुमेष पुमर्थ इष्टः ॥
कीटादिकैरपि निरन्तरसाधितेषु
स्वापादिकेषु कथमुक्तपुमर्थता स्यात् ॥ १७१ ॥
शास्त्रत्वमप्यभिमतं मतिमद्वराणा-
मन्याप्रसिद्धपुरुषार्थमतिप्रदत्वम् ॥
आपामरप्रथितरागलवाधिगम्य-
स्वापादिबोधकवचस्सु न तद् घटेत ॥ १७२ ॥
मानान्तरानधिगतार्थविधायकानि
मन्वादिशास्त्रपठितानि वचांसि न स्युः ॥
वैयर्थ्यमापतति तद्वचसां प्रसिद्ध-
रागप्रवृत्तिमवबोधयतामनिष्टम् ॥ १७३ ॥
तस्माद् वचांसि निगमादिषु यानि लोक-
सिद्धप्रवृत्त्यवगमाय महर्षिवर्यैः ॥
उक्तानि तानि सहजां पुरुषप्रवृत्तिं
रुद्धा भवन्ति न निरर्थकतास्पदानि ॥ १७४ ॥
रागात् प्रसिद्धां पुरुषप्रवृत्तिं
निवर्तयेत् क्वाप्यवशेषयेच्च च ॥
मीमांसकास् तं परिसंख्ययाहुर्
नाम्ना द्वितीयं विधिमात्मतन्त्रे ॥ १७५ ॥
यथानुरागात् पुरुषप्रवृत्तिं
श्वादेः पले पञ्चनखस्य सिद्धाम् ॥
श्वादेर् निरुन्धीत शशादिमांसे-
ऽवशेषयेद् यः स विधिर् द्वितीयः ॥ १७६ ॥

यद्यप्यृषिप्रोक्तवचस्सु नैव
नञादिकं क्वापि विधौ द्वितीये ॥
आलोक्यते वा विनिवर्तनीय-
श्वाद्यामिषस्याप्यभिधायिशब्दः ॥ १७७ ॥
तथापि वाक्येऽत्र निरर्थकत्व-
भिया नञाक्षेपजघन्यवृत्ती ॥
कल्प्ये तथात्वे तु शशादिशब्दाः
स्वशक्यभिन्नप्रकृतार्थकाः स्युः ॥ १७८ ॥
जघन्यवृत्त्यापि पदं स्वशक्य-
भिन्नं तमर्थं सहसाभिदध्यात् ॥
यः स्वीयवाक्ये प्रकृतोऽपि केन
रूपेण वोक्तः सति संभवे स्यात् ॥ १७९ ॥
असंभवेऽप्यप्रकृतं तमेव
जघन्यवृत्त्याभिदधाति शब्दः ॥
वक्तुर् धियो यो विषयोऽन्यथा तु
कस्यापि बोधो न हि संशयात् स्यात् ॥ १८० ॥
एवं तु खड्गः शशकूर्मगोधा-
शल्लक्य आद्या इति धर्मशास्त्रे ॥
उक्तिः स्फुटा पञ्चनखस्य यास्ति
न तद्बलादन्यनिषेधकत्वम् ॥ १८१ ॥
युक्तं च तद् यत् प्रकृतस्य बुद्ध्या-
पेक्षा भवेन् नाप्रकृतस्य शीघ्रम् ॥
विधौ निषेधे प्रकृतानपेक्षे
स्याद् गौरवं ज्ञानकृतं विलम्बात् ॥ १८२ ॥

ततस् तु खड्गादिविधौ शशादि-
पदस्य तद्भिन्नपदार्थकत्वात् ॥
नञः समाक्षेपबलाच् छशादि-
भिन्ना न भक्ष्या इति चार्थबोधः ॥ १८३ ॥

तत्रापि नापञ्चनखस्य किं तु
निषेधनं पञ्चनखस्य तेन ॥
वाक्येन शब्दात् प्रकृतोऽस्ति योऽर्थस्
तस्यैव नान्यस्य गुरुत्वभीतेः ॥ १८४ ॥

एवं तु सर्वत्र विधिर् द्वितीयो
निषेधमात्रावगतौ समर्थः ॥
विधायकत्वं तु तमंशमेवा-
दायास्य शास्त्रादिषु सुप्रसिद्धम् ॥ १८५ ॥

यद् वा न नञ् तत्र वचस्युपात्तः
स्फुटं ततो नास्य निषेधकत्वम् ॥
ततो विधित्वादपरं किमन्यल्
लिङादियुक्तेऽत्र घटेत वाक्ये ॥ १८६ ॥

भङ्ग्यन्तरेणास्य निषेधकत्व-
फलं तु पापातिशयावबोधः ॥
निषेध्यवर्गे शशकादिके तु
पापप्रदत्वावगतिश् च नूनम् ॥ १८७ ॥

शशादिभिन्नस्य निषेधमात्रे
वाक्यात् कृते केन शशादिके स्यात् ॥
पापप्रदत्वावगतिस् तदन्ये-
ष्वत्यन्तपापप्रदतामतिश् च ॥ १८८ ॥

यद्यप्यमुष्मिंस् तु विधौ द्वितीये
दोषोऽधिकः स्वार्थविहानिमुख्यः ॥
भवेदवश्यं सहनीय एष
विधानवैयर्थ्यबलाद् विधिज्ञैः ॥ १८९ ॥

ऋतावुपेयात् पुरुषः स्वभार्या-
मेषोऽपि नापूर्वविधिः प्रवृत्तेः ॥
सर्वेषु दारेषु सदैव रागात्
सिद्धा विधिः किं तु मतो द्वितीयः ॥ १९० ॥

यत् त्वस्य वाक्यस्य नियामकत्व-
माचक्षते लाघवमाददानाः ॥
प्रागुक्तदोषाननुसंदधाना
विधौ द्वितीये तदयुक्तमेव ॥ १९१ ॥

यतो यदा लाघवयुक्प्रकार-
माश्राय वाक्यं न भवेत् कृतार्थम् ॥
तदापि भीतिर् गुरुता कृता स्यात्
तिलाञ्जलिस् तर्हि विधौ द्वितीये ॥ १९२ ॥

तस्माद् गुरुत्वं यदि लाघवस्य
स्यात् संभवो दूषणमस्ति तर्हि ॥
यदा न लभ्येत लघुः प्रकारः
कश् चित् तदा दूषणता न तत्र ॥ १९३ ॥

विज्ञानभिप्रेततमत्वभिन्नं
किं दूषणत्वं गुरुतागतं स्यात् ॥
का वा लघुत्वे गुणता बुधेष्ट-
तमत्वभिन्नाप्युररीक्रियेत ॥ १९४ ॥

ततस् तु यत्रास्ति गतिद्वयस्य
संभावना तत्र गुरुप्रकारः ॥
त्यज्येत धीरैरिति तस्य सिद्धं
स्याद् दूषणत्वं लघुतानिरूप्यम् ॥ १९५ ॥

यत्र त्वनेको न भवेत् प्रकारः
किं त्वेक एवाक्षरयोजनादौ ॥
लघुर् गुरुर् वाऽस्तु स एव धीरै-
रादास्यते तद् गुणतैव तत्र ॥ १९६ ॥

लोकेऽपि पन्थाः कुटिलो न विज्ञै-
रादीयते स्यात् सरलोऽपि यत्र ॥
यत्रैक एवास्ति स एव वक्रो-
ऽप्यादास्यते सद्भिरिति प्रसिद्धम् ॥ १९७ ॥

एवं च दाराभिगमावबोध-
क्षमेऽत्र वाक्ये विधिता तृतीया ॥
न संघटेतेति विधित्वमस्य
द्वितीयमेवाभ्युपगम्यते ज्ञैः ॥ १९८ ॥

नासावपूर्वोऽपि विधिर् घटेत
यतोऽप्रसिद्धस्य विधायको यः ॥
धर्मस्य दुःखोपचितस्य शास्त्रे
मतस् त्वपूर्वः प्रथमो विधिः सः ॥ १९९ ॥

यथार्द्रवस्त्रत्वमुखस्य दुःख-
प्रदस्य शीतादिकृतौ विधिर् यः ॥
अत्यन्तमप्राप्तमसौ विधत्ते
तस्मादपूर्वो विधिरेष चाद्यः ॥ २०० ॥

न चात्र दाराभिगमः कथं चि-
दप्राप्त इत्यस्य विधिस् त्वयं यः ॥
नापूर्वतामर्हति धीरधीभि-
रित्यप्यवश्यं स्मरणीयमत्र ॥ २०१ ॥

प्राप्नोति पक्षे विधिमन्तरा यः
प्राप्नोति नाप्यस्य विधायको यः ॥
सोऽयं तृतीयो नियमो विधिः स्या-
दित्यामनन्त्युत्तमविध्युपज्ञाः ॥ २०२ ॥

यथावघातो वितुषीक्रियायै
प्राप्नोति पक्षे नखकर्तनेन ॥
फलस्य सिद्धौ तु न तण्डुलानां
प्राप्नोति चेत्यस्य विधिस् तृतीयः ॥ २०३ ॥

तुल्यं फलं यद्यपि तण्डुलानां
स्वरूपनिष्पत्तिरिहावघातात् ॥
निकर्तनाच्चापि नखैस् तथापि
विधिस् तु पुण्यावगमाय तस्य ॥ २०४ ॥

सर्वत्र चैतस्य विधेरदृष्ट-
फलावबोधक्षमतैव विज्ञैः ॥
अङ्गीकृता तुल्यफलस्य सिद्धा-
वप्येकबीजस्य नियामकत्वात् ॥ २०५ ॥

व्रीहीन् निकृत्याप्यवहत्य तुल्यं
प्राप्नोति दृष्टं फलमत्र लोकः ॥
ततस् तु यद् व्रीह्यवघातमेष
विधिर् विधत्ते स निरर्थकः स्यात् ॥ २०६ ॥

ततस् तु वाक्यं स्वनिरर्थकत्व-
दोषापनुत्त्यै पुरुषस्य पुण्यम् ॥
प्रकल्पयेत् सार्थकता तदाऽस्य
स्पष्टैव पुण्यावगतिक्षमत्वात् ॥ २०७ ॥

निकर्तनादौ न विधिः समर्थो-
ऽयं पापपुण्याद्यवबोधने तु ॥
यतोऽवघातेऽवगमय्य पुण्य-
संपादकत्वं चरितार्थ एषः ॥ २०८ ॥

यद्यप्यमूदृग्विषयेऽपि पूर्व-
प्रोक्तामिषप्राशनवाक्यतुल्यम् ॥
निकर्तनादेर् दुरितप्रदत्व-
बोधप्रक्लृप्त्या विधिसार्थकत्वम् ॥ २०९ ॥

संभाव्यतेऽथापि निरुक्तदोष-
ग्रासाद् द्वितीयो न विधिर् विधिज्ञैः ॥
अङ्गीकृतो यत्र तु नास्ति का चि-
दन्या गतिस् तत्र स एव युक्तः ॥ २१० ॥

श्वशादिवाक्यं श्वशकादिमांसा-
शनेऽपि धर्मं परिकल्प्य तद्वत् ॥
स्यात् सार्थकं कुक्कुरमुख्यमांसा-
शनेऽप्युदासीनमदो न किं स्यात् ॥ २११ ॥

पुण्यावबोधेऽपि श्वशादिवाक्य-
स्यानर्थकत्वं तदवस्थमेव ॥
यतो जनानां सततं प्रवृत्तिः
सिद्धैव तत्रेति किमस्य कृत्यम् ॥ २१२ ॥

पुण्यावबोधोऽपि जनप्रवृत्त्यु-
त्पादाय नूनं मुनिभिः क्रियेत ॥
वाक्यैः स्वकीयैरथ तस्य रागात्
सिद्धौ कथं वाक्यकृतार्थता स्यात् ॥ २१३ ॥

ततस् तु तद्वाक्यनिरर्थकत्वा-
पनोदनायैव शशादिवाक्ये ॥
पापप्रदत्वावगतित्वमत्वं
प्रकल्पनीयं शुनकादिमांसे ॥ २१४ ॥

न यत्र सिद्धा तु जनप्रवृत्तिः
पक्षे तदा पाक्षिकतत्प्रवृत्तेः ॥
उत्पादनायावगमय्य पुण्यं
वाक्यं कृतार्थं भवतीति बोध्यम् ॥ २१५ ॥

एवं च तद्वाक्यकृतार्थताया
जघन्यवृत्त्यादिकमन्तरापि ॥
सिद्धौ न शक्यं नखकर्त्तनादा-
वघावहत्वं वचनेन बोद्धुम् ॥ २१६ ॥

यदावघातो न नखैर् निकृत्तिर्
यदा निकृत्तिर् न तदावघातः ॥
प्राप्नोति साध्यं यदि सिद्धमेक-
बीजेन वाञ्छेत् कतमस् तदाऽन्यत् ॥ २१७ ॥

मांसेषु सर्वेषु नृणां प्रवृत्तिर्
न पाक्षिकी क्वापि रसस्य भेदात् ॥
परस्परं तद् युगपत् समेषां
प्राप्त्या न चायं नियमो विधिः स्यात् ॥ २१८ ॥

एवं स्वकीयेषु परेषु नृणां
दारेषु सिद्धा पशुवत् प्रवृत्तिः ॥
तत्रान्यदारेषु जनप्रवृत्ति-
रोधाय वाक्यं चरितार्थमेतत् ॥ २१९ ॥

यद्वानृतावप्यृतुषु प्रवृत्तिः
सिद्धैव लोकस्य पशूपमाना ॥
तत्रानृतौ तत्प्रतिषेधनाय
मन्वादिभिर् वाक्यमिदं प्रणीतम् ॥ २२० ॥

यदा तु वाक्यस्य नियामकत्वं
स्यादस्य तर्ह्येतदशक्तमेव ॥
दारान्तरस्याभिगमेऽघदत्व-
बोधे बुधैरित्यपि बोध्यमत्र ॥ २२१ ॥

किं चास्य वाक्यस्य नियामकत्वे
स्वकीयदाराभिगमे जनानाम् ॥
धर्मत्वमेतद्वचसावगम्यं
तद् बाधितं प्राक्कथितप्रकारैः ॥ २२२ ॥

यस्यावघातेन जनस्य सिद्धा-
ऽन्यथैव लब्धुः फलमेतदीया ॥
नूत्ना प्रवृत्तिर् वचनात् तदानी-
मुत्पादनीया सुकृतत्वबोधात् ॥ २२३ ॥

ततस् तु तत्रावहतौ वृषत्व-
बोधाय वाक्यं कथितं पुरस्तात् ॥
नियामकं यत् तदबाधितार्थ-
मेवेति सूक्ष्मं सुनिरीक्षणीयम् ॥ २२४ ॥

दारेषु लोकस्य तु या प्रवृत्तिः
सा प्राप्तिकी नेत्युदितं पुरैव ॥
अनेकशस् तद्विधिरेष नाल-
मपूर्वबोधाय धियेति चिन्त्यम् ॥ २२५ ॥

उक्तापि ये त्वस्य नियामकत्वं
स्वकीयदारागमने वदन्ति ॥
पापावहत्वावगमप्रदत्व-
मापातरम्यं कथनं तु तेषाम् ॥ २२६ ॥

यस्मान् न वाक्यमवघातविधायकं यत्
तत् कर्त्तनादिषु विबोधयतीति किं चित् ॥
पुण्यप्रदत्वमथ वा वृजिनावहत्व-
मुक्तं पुरैव तदिहाप्यवलोचनीयम् ॥ २२७ ॥

एवं तु तद् वचनमेनसि वा वृषे वो-
दासीनमेव नखकर्त्तनमुख्यनिष्ठे ॥
एवं स्वदारगमनादिविधिर् यथाय-
मप्यन्यदारगमनेऽपि तटस्थ एव ॥ २२८ ॥

धान्यावघातविधिनावहतेरभावे
पापं न शक्यमवबोधयितुं यथैवम् ॥
दारप्रसङ्गविधिनापि रतेरभावे
शक्यं न पापमवबोधयितुं कथं चित् ॥ २२९ ॥

तत्पुण्यलाभविरहो यदि संमतः स्यात्
पाप्मा तदा तु न कृतावहतिर् जनैर् यैः ॥
सर्वेऽपि ते निरयगामिन एव नूनं
संपादितान्यसुकृता अपि संभवेयुः ॥ २३० ॥

यागप्रवृत्तपुरुषस्य मतोऽवघाता-
भावो यदा वृजिनदायितया तदा तु ॥
क्रत्वङ्गताऽवहननेऽपि न कल्प्यते किं
किं कल्प्यते वृजिनताऽवहतेरभावे ॥ २३१ ॥

यज्ञप्रसक्तमनुजेन यदाऽवघातो
नाकारि येन किमु तस्य मखांशहानेः ॥
अन्यत् किमप्यभिमतं वृजिनं न चेत् स्या-
दास्थेयमस्य मखपूर्त्तिकरत्वमेव ॥ २३२ ॥

तस्मान् नियामकतयाऽभिमतं स्वदार-
रत्यादिबोधकवचो यदि तर्हि तन् न ॥
ईशीत पापमवबोधयितुं कदापि
दारागमे तदिति सूक्ष्मधियावसेयम् ॥ २३३ ॥

भार्यागमस्य विरहे यदि पापता स्या-
दिष्टा तदा तु यतिवर्णिवनस्थमुख्याः ॥
सर्वेऽपि वृद्धशिशुरोगिविदेशसंस्थ-
मुख्या अवश्यमतिपातकिनो भवेयुः ॥ २३४ ॥

पाणिग्रहं कृतवतो गृहिणो जराद्यैर्
विघ्नैरबाधिततनोर् मनुजस्य पापम् ॥
दाराऽगमे यदि भवेदिति तद्वचोऽर्थो-
ऽभिप्रेत इत्यपि न युक्तियुतः प्रलापः ॥ २३५ ॥

यस्माज् जरादिरहितत्वविशेषणानि
कल्प्यानि नूनमधिकारिगतानि कस्मात् ॥
वाक्ये क्वचिन् न पठितानि ततो गुरुत्व-
दोषोऽपि तत्र पततीति विभावनीयम् ॥ २३६ ॥

वाक्यार्थवत्त्वफलकं यदि कल्पनं स्या-
दिष्टं तदा लघुतरो न हि कल्प्यते किम् ॥
रागप्रसक्तपुरुषप्रतिरोधकत्वात्
सार्थक्यरूप उदितोऽनुपदं प्रकारः ॥ २३७ ॥

किं च प्रक्लृप्तिविरहेऽपि विशेषणस्य
प्राक्प्रोक्तरोगरहितत्वमुखस्य नेदम् ॥
वाक्यं निरर्थकमघप्रतिपादकत्वाद्
वृद्धादिकेष्वपि यतो विषयोऽस्य लब्धः ॥ २३८ ॥

किं चोक्तरोगरहितत्वमुखैः प्रकारैर्
युक्तस्य पातकमिदं सुरताद्यभावे ॥
किं बोधयेत् सुतसुखानुपलब्धिभिन्नं
यद् दृष्टसत्फलमदृष्टपरं न किं चित् ॥ २३९ ॥

पुत्रादिसौख्यरहितत्वमनेन बोध्यं
स्यात् पातकं यदि तदा तु निरर्थकत्वम् ॥
स्पष्टं पुरोक्तवचसस् तदमुष्य नून-
मास्थेयमन्यविनिषेधनतत्परत्वम् ॥ २४० ॥

स्वस्थोऽपि यो न कुरुते सुरतं स्वदारैः
स भ्रूणहेति वचनं तु य आत्मदारान् ॥
हित्वाऽन्यदारनिरतः प्रतिघादिना त-
त्पापस्य बोधकमिति प्रथितं बहुत्र ॥ २४१ ॥

एवं च नेदमपि वाक्यमघं स्वदारा-
सङ्गेऽवबोधयति किं तु परेषु सक्तः ॥
दारेषु पातकमुपार्जयतीति तस्मान्
नास्यापि पूर्ववचनेन विरुद्धताऽस्ति ॥ २४२ ॥

स्युश् चान्यदारनिरता यदि मानवास् तन्
नैषां घटेत पशुवत् सुरतव्यवस्था ॥
तर्ह्यत्युपप्लवपराः सततं मनुष्या
जीवेयुरेव कथमित्यपि भावनीयम् ॥ २४३ ॥

दारेषु किं च पुरुषः क्रमशः प्रवृत्त
आपादयत्युरुतरात्मगुणांस् तु तत्र ॥
एवं तु तुल्यगुणयोः सुरतं न कां चि-
दापादयेद् विकृतिमन्तरतो बहिर् वा ॥ २४४ ॥

ये चान्यमानवरतैः सुचिरात् तदीय-
बाह्यान्तरप्रकृतिमापुरमीषु सक्तः ॥
दारेषु ना न सुखलेशमपि त्वतीव
दुःखं लभेत चिरमात्मविरुद्धसङ्गात् ॥ २४५ ॥

एतेन यन् मुनिवरैरुदितं परेषु
दारेषु सङ्गगुरुतालघुताप्रयुक्तम् ॥
एनोगुरुत्वलघुतादि तदञ्जसापि
व्याख्यातमेव भवतीति विभावनीयम् ॥ २४६ ॥

यद्येकपादचिरसक्तमुपानदादि
पादान्तरे परिहितं दशतीति सर्वैः ॥
नित्यं जडेषु विषयेष्वनुभूयते तद्
दारेषु तद्वदवधेयमघावहत्वम् ॥ २४७ ॥

दारेषु भिन्नगुणदोषयुतैर् मनुष्यैर्
भ्रष्टेषु भूरिभिरणुं कुरुते प्रसङ्गम् ॥
यस् तत्क्षणं स उरुरोगविदीर्णदेहो
नूनं भवेदिति विदामपरोक्षमेव ॥ २४८ ॥

या कन्यका न पुरुषान्तरदूषिताऽस्या-
मुत्पद्यते प्रथममेव यदीयसङ्गात् ॥
यः स्याद् गुणादिरनुकूलतमोऽस्य तस्मात्
कन्याविवाहविधिरप्यमुमर्थमाह ॥ २४९ ॥

मृत्सादिनूतनघटोऽपि सुराघृतादि-
द्रव्येण येन भवति प्रथमं प्रपूर्णः ॥
नोज्झत्यमुष्य रसगन्धमुखान् गुणादीन्
काले चिरेऽपि विगते बहु दृष्टमेतत् ॥ २५० ॥

स्त्रीपुंससङ्गतिनिमित्तकगर्भरक्षा
नारीषु नैव पुरुषेषु कदापि दृष्टा ॥
तद्वद् यथा न पुरुषेऽभिमता गुणादेः
संक्रान्तिरन्यजनसङ्गविहीननार्याः ॥ २५१ ॥

रोगादिकं यदुपसर्पति सङ्गमात्रान्
नारीगतं क्वचिदिदं पुरुषान्तरस्य ॥
सङ्गात् स्त्रियां स्वयमतिप्रबलामयस्य
सद्भावतो भवति वेति न तत्र चित्रम् ॥ २५२ ॥

पामादिकं यदुपसर्पति तद्युतस्य
स्पर्शात् सहासनसहाशनमात्रतो वा ॥
तत् किं रतेन न भयानकरोगमुख्या
धावेयुराशु मिथ इत्यपि सुप्रसिद्धम् ॥ २५३ ॥

यत् तु प्रकृत्यनुगतं गुणदूषणादि
संक्रामति स्त्रियमदो न यथा तथाऽऽशु ॥
प्रायः पुमांसमिति सर्वजनप्रसिद्ध-
मीशीत कोऽपलपितुं मतिमान् रतिज्ञः ॥ २५४ ॥

एतेन यत् पुरुषपाणिनिपीडनं स्यान्
नानापि दारकरपीडनमेकमेव ॥
इत्यादिका मुनिवरोक्तिरयुक्तिकेति
निन्दोक्तिरेव मुनिवाग्विषया परास्ता ॥ २५५ ॥

किं चैष ना प्रतिदिनं सुरतेन गर्भं
शक्नोति धारयितुमित्यपि सुप्रसिद्धम् ॥
द्विस् त्रिष् च नैवमबलेति न सृष्टिहानिः
स्यादित्यनेककरपीडनमस्य शस्तम् ॥ २५६ ॥

यद्येकदाररतिपूरणशक्तिहीनः
षण्ढत्वदूषणयुतोऽप्यथ वामयावी ॥
स्यान् ना तदा परिणयान्तरमेतदेव
नार्या विधाय मुनयोऽपि निषेधयन्ति ॥ २५७ ॥

तत्राशयो विधिवचोगत एष एव
संवर्द्धतां मनुजसृष्टिरियं सदैव ॥
यस्मात् समस्तजडचेतनवस्तुतत्त-
त्कार्यत्वमेयमिति नान्यदितः समर्थम् ॥ २५८ ॥

भावो निषेधवचसां तु मनुष्यसृष्टिर्
नूनं समस्तजडचेतनकार्यहेतुः ॥
तद्बुद्ध्यशुद्धिवशतः सकलाशुचित्वं
मा भूदशेषभवदुःखकरं तथेति ॥ २५९ ॥

बुद्ध्युत्तमत्वकृतमेव नरस्य सर्वो-
त्कृष्टत्वमिष्टमिति तत् परिरक्षणीयम् ॥
सर्वैः सदा मनुजसृष्टिविवृत्सुभिस् त-
द्धानौ यतो जगदुपप्लव एव भावी ॥ २६० ॥

यो राक्षसप्रकृतिरुग्रमतिः कदा चि-
देकोऽपि कुत्र चिदजायत भूविभागे ॥
तस्मात् क्रियाञ् जगदुपद्रव आविरासी-
दित्यादि सम्यगवगम्य यतेत सृष्टौ ॥ २६१ ॥

या स्त्री पतिं कमपि पूर्वमुपास्य बुद्ध्या-
प्यन्यं करिष्यति पतिं विधवापि पश्चात् ॥
तत्सृष्टिबुद्धिपरिशुद्धिरवश्यमेव
हीना भवेदिति बुधैरवधारणीयम् ॥ २६२ ॥

प्रागुक्तयुक्तिमवधार्य महामनीषी
कन्यां हृतामपि विहाय नृपोत्तमस्य ॥
आदेहपातमभवत् सततोर्द्ध्वरेता
वाञ्छन् समस्तजनताशुभमेव भीष्मः ॥ २६३ ॥

अन्येऽपि ये हनुमदादय उत्तमेहाः
शक्ताश् च वीर्यमवरोधयितुं कथं चित् ॥
तैः सृष्टिरक्षणमनुत्तममात्मवीर्यात्
संदर्शितं न पुनरात्मजवर्द्धनाद्यैः ॥ २६४ ॥

अद्यापि यः कथमपि स्वपरस्त्रिया ना
सङ्गं विवर्जयितुमीष्ट इतो यथायम् ॥
लोकस्य पालनरतो भविता तथैते
नारीरताः शतमपीति न सुप्रसिद्धम् ॥ २६५ ॥

तस्मान् नरैर् मतिमतां प्रवरैः सदैव
यत्नेन दारगुणदोषगणान् समीक्ष्य ॥
सृष्टिं चिकीर्षुभिरपि प्रतिकूलदार-
पाणिग्रहः क्षतिकरः परिवर्जनीयः ॥ २६६ ॥

यद्येकपुंस्यकृतपाणिनिपीडनापि
चेतोऽनुरागलवमात्रवशादयोग्या ॥
साधुप्रजाप्रजनने पुरुषान्तरेण
सार्द्धं तदा कृतविवाहवधूकथा का ॥ २६७ ॥
यद्यप्यसावहतयोनिरथापि पत्यौ
संभाषणप्रमुखबद्धमनोऽनुरागा ॥
कीर्त्तिश्रुतेरधिकजाततदीक्षणाद्यु-
त्कण्ठाथ वा न पुरुषान्तरसङ्गयोग्या ॥ २६८ ॥
यादृग्गुणं तु वड्वा सुरते सदश्व-
मीक्षेत तत्सदृशमेव सुतादि सूते ॥
गौर् यादृशी भवति तत्प्रसवस् तु तादृ-
गित्यादि लोकविदितैव विचित्रताऽस्ति ॥ २६९ ॥
तत् किं बधूषु न विचित्रतरत्वमेवं
किं चिद् भविष्यति धियेति विचार्यते ज्ञैः ॥
गर्भादिधारणमुखं कियदप्यमुष्य
कार्यं स्फुटं सततमत्र दृशाऽपि दृष्टा ॥ २७० ॥
एवं च याऽहतभगा क्षतयोनिका वा
नारी द्वितीयपतिसङ्गमुपेत्य सूते ॥
वंशं यमेष जगदार्त्तिविवृद्धिकारी
नूनं भवेदिति न विस्मरणीयमज्ञैः ॥ २७१ ॥
बालैव या विधिवशाद् विधवा भवेत् सा
वैधव्यमूलमतिकष्टमिहायुवत्त्वम् ॥
प्राप्नोति नूनमिति तत्परिहारहेतोर्
युक्तं द्वितीयकरपीडनमेव नार्याः ॥ २७२ ॥

किं चाबला निजसुखाय परेण पुंसा
संगोप्य संगतिमवश्यमिहाचरेयुः ॥
दैवात् कदा चिदिह गर्भधृतिस् तदैत-
न्निष्पातनेऽपि निजवंश्यभयाद् यतेरन् ॥ २७३ ॥
किं चातिदुःखमबला विधवात्वमूलं
सोढुं न शक्ष्यति मनोजकृतान्धता या ॥
निर्गत्य सा निजगृहान् निजपांसुलात्व-
संरोधकानरिवदेव निरीक्षयेत ॥ २७४ ॥
किं च प्रतिष्ठितगृहादभिसृत्य नारी
कामातुराधमपुमन्तरसंगता चेत् ॥
नष्टैव तत्कुलभुवां सकला प्रतिष्ठा
या संचितापि चिरमुत्तमतत्कुलोत्थैः ॥ २७५ ॥
इत्यादि सम्यगवमृश्य विशेषहानि-
बीजं निनाशयिषुभिर् विधवाविवाहः ॥
संस्थाप्यते परमयं कथितो वितर्क
आपातरम्य इति सूक्ष्मधिया निरीक्ष्यम् ॥ २७६ ॥
पत्युर् वियोगजनितं तु कथं प्रशाम्येत्
पूर्वस्य दुःखमपरैः शतशः कृतेऽपि ॥
पाणिग्रहे सुपुरुषैरनिशं वियोग-
संयोगशालिभिरिति प्रविवेचनीयम् ॥ २७७ ॥
प्रेमास्पदस्य विषयस्य वियोगजन्यं
दुःखं न शाम्यति ततोऽपि सुखप्रदस्य ॥
संयोगतोऽपि विषयप्रकृतिर् न धीरैर्
विज्ञायते किमिति तर्कमतिप्रधानैः ॥ २७८ ॥

कालेन नश्यति वियोगसमुत्थदुःखं
यत् सर्वमेव समयेन विनाशमेति ॥
इत्यादिकं यदि विभावयते तदा तु
व्यर्थः पुनःकरनिपीडनयत्न एषः ॥ २७९ ॥

कामज्वरार्त्तिशमनाय चिकीर्षितोऽयं
यत्नो भवेद् यदि तदापि लघोरुपायात् ॥
आहारलाघवमुखात् क्रियते तु शान्तिस्
तस्याः कुतो न बहुमुन्युदिताद् यथेष्टम् ॥ २८० ॥

संतानवृद्धिफलकोऽभिमतो यदैष
तर्हि प्रदर्शितमनर्थकरत्वमस्याः ॥
संस्मृत्य किं न विधवाकरपीडनस्य
जह्याः प्रयत्नमृषिभिर्विनिवारितस्य ॥ २८१ ॥

रण्डाविवाहजनितस् तनुजो बहूनां
स्याद् दुःखदस् तदवरोधनजं तु दुःखम् ॥
तस्याः परं मनसि सम्यगिदं विमृश्य
लोकोपकारनिरतः कथमेनमिच्छेत् ॥ २८२ ॥

किं चाबला यदि कुटुम्बभयात् कदा चित्
संगोप्य संगतिमियात् पुरुषान्तरेण ॥
नूनं तदा स्वरतिगुप्तिमनाः पुरैव
कुर्यात् स्वगर्भधृतिवारणयत्नमेषा ॥ २८३ ॥

चेद् राजदण्डभयमत्र भवेन् न येषां
किं किं न कुर्युरबलाः पुरुषाश् च तेऽपि ॥
तस्माद् यथान्यनृपवारितकार्यरोधो
गर्भस्य पातनमिदं न तथाऽस्ति रुद्धम् ॥ २८४ ॥

किं चेदृशोऽपि पुरुषः क्व चिदस्ति कोऽपि
यच्छत्रुरत्र न भवेत् प्रथितस् ततस् तु ॥
न्याय्यं न कर्म यमभीतियुतोऽपि जह्यान्
मार्गोऽयमन्तसुखदो विदुषां प्रसिद्धः ॥ २८५ ॥

स्यादेव यस्य विधवाभयमेष तस्याः
साहाय्यमाचरतु किं न मनोऽभिलष्ये ॥
रण्डाविवाहजनितादपरादनर्थान्
नास्यास्ति भीतिरिति चित्रमतः परं किम् ॥ २८६ ॥

किं चाबलासु निहितः स्वकुलाभिमानो
येनानुरोत्स्यति सदैव तदीप्सितं सः ॥
येन त्वसौ विनिहितः पुरुषेषु नूनं
नारीचरित्रमतिचित्रमुपेक्षिता सः ॥ २८७ ॥

विद्यातपोधनसदाचरणादिजन्या
या संचितास्ति पुरुषैरतिधीरधीभिः ॥
तां नापहर्तुमबला इह शक्नुवन्ती-
त्यालोच्य ना सुचरितो बिभियान् न कश् चित् ॥ २८८ ॥

यस्याबलासु कुलटास्वपि नो विहीनो
लोभः स यद्यपि भवेदपकीर्तिरत्र ॥
तद्बीजमात्ममतिरेव न चाबलाः स्यु-
रित्यादि किं न परिभाव्य सुखी भवेज् ज्ञः ॥ २८९ ॥

आभाणकोऽपि विदितस् त्विह लौकिकानां
सत्क्षीरपूर्णचषकादभिनिर्गता या ॥
क्षीरं न दूषयितुमर्हति मक्षिका से-
त्यादिर् न सोऽपि हृदयं स्थिरयेन् नृणां किम् ॥ २९० ॥

नार्या बिभेति पुरुषोऽपि य एनमेषा
संनर्तयेद् य इह भीषयते सदा ताम् ॥
नूनं न तद्भययुता मनसाऽप्यकार्यं
संभावयेदिति च धीरनरैर् विभाव्यम् ॥ २९१ ॥
नार्याः सदैव विहिता परतन्त्रता या
मन्वादिभिर् मुनिवरैरपि तन्निमित्तम् ॥
इत्येव यत् स्ववशगा सततं कुकर्म-
निष्ठा भवेत् सहजदोषवशादियं तु ॥ २९२ ॥
तस्मात् पुरातनमुनिप्रवरैर् निषिद्धं
शिष्टागृहीतमपि यः स्पृहयिष्यतीह ॥
रण्डाविवाहमवरोधयितुं प्रवृत्तो
नूनं स वार्षिकमहातटिनीप्रवाहम् ॥ २९३ ॥
यद्यप्यसाध्विति सुसाध्विति वा व्यवस्था
कुत्रापि वस्तुनि न साध्ववगन्तुमर्हा ॥
यत् सर्वमेव पुरुषैर् न निषिध्यते ना-
प्यादीयते विविधधर्मरतैश् च सर्वैः ॥ २९४ ॥
एवं तु साधुचरितत्वनिमित्तकं नो
शिष्टत्वमर्हमवधारयितुं क्व चिद् यत् ॥
सर्वे स्ववर्ग्यधृतधर्मजुषः स्ववर्ग्यैः
कथ्यन्त एव भुवि शिष्टतमा मनुष्याः ॥ २९५ ॥
एवं तु वेदविहिताभिरतत्वमुख्यं
शिष्टत्वमित्यपि न सार्वजनीनबुद्धिः ॥
किं त्वेकदेशिमतमेव भवेत् कदा चित्
चोदत्वमं तदपि नेति तु चिन्तनीयम् ॥ २९६ ॥

वेदत्वधीरपि भविष्यति शिष्टवाक्यात्
तत्त्वेन बुद्धिजननादथ शिष्टताधीः ॥
वेदोक्तकर्मनिरतत्वमतेस् ततः स्या-
दन्योन्यसंश्रय इति प्रविवेचनीयम् ॥ २९७ ॥
स्यात् पूरुषाद्यरचितत्वनिमित्तकं चेद्
वेदत्वमेतदपि वाक्यविशेषनिष्ठम् ॥
ज्ञातं कुतो यदि परम्परया सतां तत्
पूर्वोक्त एव न निवृत्तिमुपैति दोषः ॥ २९८ ॥
तस्मात् स्ववर्ग्यबहुलोकविनिन्द्यकर्म-
राहित्यमेव निजशिष्टतमत्वमिष्टम् ॥
आपेक्षिकं जनकतादिवदेतदेवं
तूक्तं भवत्यखिललोकमतं हितं च ॥ २९९ ॥
एवं तु यद्यखिलकर्म समानमेव
तर्ह्येतदेव करणीयमिदं तु नेति ॥
वाचां मृषात्वमिव भाति पुरातनीनां
व्यासादिभिर् मुनिवरैर् लिखितोदितानाम् ॥ ३०० ॥
आलोचनीयमिदमेव पुरो मुनित्वं
किंबीजकं प्रथितमेषु तथापि लोके ॥
तेनैव सर्वकलहस्य भवेन् निवृत्तिर्
दूरे तु तद्वचसि लोकवृथात्ववादः ॥ ३०१ ॥
लोकैरभीप्सितमपि प्रविहाय पुत्र-
वित्तादि ये सकललोकहिताहितानि ॥
ध्यायन्ति धीरमतयोऽनिशमात्मदेह-
स्यैकं तदेव फलमित्यपि ते मुनीन्द्राः ॥ ३०२ ॥

त्यक्त्वापि लोकसुखकारणमात्महस्त-
विल्वोपमं परहिताय परं धरन्ति ॥
देहं स्वकीयमनिशं निरता विचारे
धीरोत्तमैर् निगदिता अपि ते मुनीन्द्राः ॥ ३०३ ॥

कष्टं परं परहिताय सदा सहन्ते
निद्राशनादिकमपि प्रविहाय बौद्धम् ॥
शारीरमप्यतिविशुद्धधियः क्रमेण
जाताः सतामभिमता अपि ते मुनीन्द्राः ॥ ३०४ ॥

नित्यं विचाररतधीश्रमजन्यशुद्ध-
ज्ञानेन यस्य सकलं करविल्वतुल्यम् ॥
आभाति न क्व चिदबोधलवः कदापि
ते धर्मनिर्णयसमर्थतमा मुनीन्द्राः ॥ ३०५ ॥

येषां न कोऽपि न निजो न परः समेषू-
दासीनतैव विलसत्यनिशं जनेषु ॥
कर्माणि केवलदयापरतन्त्रभावात्
कुर्वन्ति ते सकललोकहिता मुनीन्द्राः ॥ ३०६ ॥

यस्येङ्गितादिभिरशेषभवे न कस्या-
प्याशासितापकृतिरार्तिपराभवेऽपि ॥
किं तूपकारततिरेव सदा समेषां
ते कृत्स्नदुःखपरिहाणिपरा मुनीन्द्राः ॥ ३०७ ॥

ज्ञात्वाऽपि शास्त्रनिगमादिरहस्यमन्तर्
ध्यायन्ति नैव वितरन्ति कदाप्यपात्रे ॥
स्वप्नेऽपि नो मदलवो निजबोधजन्यो
येषां त एव जगति प्रथिता मुनीन्द्राः ॥ ३०८ ॥

ये न क्व चिद् धनयशःसुखलाभलोभा-
दुद्घाटयन्ति निगमागमतत्त्वरत्नम् ॥
शुश्रूषया विधिवशाद् वितरन्ति पात्रे
स्वान्तस्थितं स्थिरधियः खलु ते मुनीन्द्राः ॥ ३०९ ॥
प्राणात्ययेऽपि गुरुवेदवचांसि नाति-
क्रामन्त्यकार्यनिरतान् न विलोकयन्ते ॥
धर्मच्युतिं विगणयन्ति शरीरनाशा-
दत्याहितं य इह ते प्रथिता मुनीन्द्राः ॥ ३१० ॥
येषां वचांस्यखिललौकिकदीनजीवो-
द्धाराय सुप्रकटितानि न रोषरागात् ॥
विद्यातपःसुचरितैकनिदर्शनानि
ते याज्ञवल्क्यभृगुभीष्ममुखा मुनीन्द्राः ॥ ३११ ॥
एतादृशामपि वचांसि वृथा यदि स्युश्
छिन्नैव सर्वजगतां व्यवहारवेला ॥
वाङ्मूलकं हि परबोधनमेतदुत्थो
नश्येद् वचःस्थितिमृते व्यवहारवर्गः ॥ ३१२ ॥
सर्वाधिकं कलुषमेतदिहाभ्युपेतं
मिथ्यावचो यदृषिभिस् तदमुष्य हेतोः ॥
सत्यात् परं न सुकृतं किमपीति तच् चा-
प्युक्तवतेर् भिय उरीक्रियतेऽन्तदृग्भिः ॥ ३१३ ॥
हेमापहारगुरुदाररतिद्विजाग्र-
घातादिभिर् न भवितेदृशलोकहानिः ॥
सा यादृशी वितथवाक्प्रभवेति केषां
नारोहतीक्षणपथं स्थिरचेतनानाम् ॥ ३१४ ॥

सर्वस्य जीवनिवहस्य समस्तकार्यं
केनापि चादिपुरुषेण वचस्तु बद्धम् ॥
तस्यान्यथात्वकरणे यतते य एष
सर्वस्य सर्वमपहर्तुमसौ प्रवृत्तः ॥ ३१५ ॥

सत्यव्रतास् तु मनुजा य इहाखिलां ते
सृष्टिं स्वकीयवचसा परितर्पयन्ति ॥
नात्रास्ति संशय इति प्रविचार्य मिथ्या
ब्रूयान् न कश् चिदिति तत्त्वविदां रहस्यम् ॥ ३१६ ॥

बोधोऽभ्युदेति वचनाद् य इह प्रसिद्धो
लोकप्रवृत्तिविनिवृत्तिनिदानभूतः ॥
तद्वाक्यगोचरमृषात्वमतिस् तु तस्य
लोकप्रवृत्तिकरताद्यपहन्तुमीष्टे ॥ ३१७ ॥

प्रागुक्तमुन्युचितचिह्नसमन्वितानां
वाक्ये मृषेदमिति संभव एव नास्ति ॥
लोभादिनैव वितथोक्तिरुदेति तेषु
लोभादिलेशविरहस्य निरूपितत्वात् ॥ ३१८ ॥

मन्दोऽपि कश् चन वृथा न वदत्यसत्यं
ब्रूयात् कृती वितथमेव मुधेति चित्रम् ॥
चातुर्य्यमुक्तमुनिषु प्रथितं तदीय-
ग्रन्थैर् जगत्प्रचलितैरनृतैर् ऋतैर् वा ॥ ३१९ ॥

तादृग्निबन्धकुशला मुनयो वृथैव
मिथ्या वदेयुरिति वक्तुमशक्यमेव ॥
यावन् न तेषु परिदर्शितमस्ति तस्य
बीजं तु तावदिति तत्त्वधिया विभाव्यम् ॥ ३२० ॥

काव्यादिकेषु कुशला अपि कस्य हेतोर्
मिथ्या वदन्ति बहुधेति न शङ्कनीयम् ॥
यत् तत्फलं प्रथितमेषु तु रूपकादेः
पुष्टिश्च चमत्कृतिकरीति न तद्वृथात्वम् ॥ ३२१ ॥

वाक्यं निषेधविधिबोधनतत्परं यत्
तत्रापि चेदनृतता यदि तर्हि नूनम् ॥
लोकस्य हानिरिति तन् न मृषा विनैव
लोभादिकारणमिति प्रविवेचनीयम् ॥ ३२२ ॥

काव्येष्वपि क्वचिदपि प्रविलोक्यते नो
लोकप्रवर्तकनिवर्तकनीतिभागः ॥
मिथ्येति धर्मपरवाक्यमृषात्वशङ्का-
कस्मिन्नुदेष्यति नृणामतिचित्रमेतत् ॥ ३२३ ॥

पौराणिकादिवचनेष्वपि यस् तु भागश्
चेतश्चमत्कृतिनिदानतया निरुक्तः ॥
सोऽपि प्रवृत्तिषु निवृत्तिषु सर्वथैवो-
दासीनतां भजतु क्वापि न हानिरत्र ॥ ३२४ ॥

ग्रन्थो न कोऽपि सकलावयवेषु निन्द्यः
स्तुत्यर्ह एव भवतीति विमृश्य तस्मात् ॥
गृह्णीत सारमपहाय कथाविभागं
लोकानुरञ्जनकृते कथितं पुराणैः ॥ ३२५ ॥

काकश्वरासभमुखादतिनीचजन्तु-
वर्गादनुत्तमगुणांश्च चिनुयाद् विपश्चित् ॥
नोपाददीत जननीजनकादिदोषा-
नित्यादिनीतिमवधार्य चरन्ति धीराः ॥ ३२६ ॥

तत् किं पुरातननिबद्धकथासहस्रे-
ष्वेकोपि नास्ति मतिमद्ग्रहणीयभागः ॥
उज्झन्ति यत् सकलमेव पुरातनोक्तं
स्वेष्टानभीष्टपरिमूढधियोऽनभिज्ञाः ॥ ३२७ ॥

नानाविधैर् हृदयहारिकथाकदम्बैर्
न स्युश् चमत्कृतिकृतो विधयो निषेधाः ॥
को नाम लौकिकमतिः शृणुयात् कटूंस् ता-
नित्यादिना सफलतास्त्वितिहासभागे ॥ ३२८ ॥

माता पिता च कटुमौषधमज्ञबालं
यत् प्राशयत्यपि विरुद्धगुडादिलोभात् ॥
तद्वन् न किं विधिनिषेधवचांसि हृद्य-
वाग्भिर् युतानि मुनिभिः कथितानि किं वा ॥ ३२९ ॥

किं चानृतत्वमपि बुद्धिविपर्ययादि-
कारित्वमेव न च तत् क्व चिदस्ति काव्ये ॥
अन्यत्र वा स्मृतिपुराणवचःसु चेत्थं
नाक्षेपलेश इति सूक्ष्मधिया निरीक्ष्यम् ॥ ३३० ॥

मन्थानभूधरनिघर्षणजन्यरन्ध्रं
चन्द्रे न चिन्हमिति वाक्यशतादपि स्यात् ॥
कस्यापि संशयविपर्ययधीः कदापि
नैवेति नेदमनृतं वचनं कथं चित् ॥ ३३१ ॥

किं तूत्तमोत्तमकविप्रतिभादिशक्ति-
मात्रस्य बोध उदियादुदितार्थबोधात् ॥
आह्लाद एव भविता न विपर्ययोऽपी-
त्यालोच्य रागिण उपाददते तमर्थम् ॥ ३३२ ॥

नैवं तु धर्मपरमुन्युदितेषु वाक्ये-
ष्वीशीत वक्तुमपि कश् चन मन्दबुद्धिः ॥
यत् तेभ्य एव सुकृताद्यवबोध इष्टस्
तानीदृशानि यदि तर्हि जगद् विनष्टम् ॥ ३३३ ॥
यत्र क्व चिन् मुनिवचःस्वपि तादृशोऽर्थः
स्यात् सोऽपि चित्तसुखमात्रकरोऽभ्युपेयः ॥
नात्र प्रवृत्तिकरतादि निरुक्तकाव्य-
वाक्यादितुल्यमिति सूक्ष्मदृशां समक्षम् ॥ ३३४ ॥
आह्लादमात्रफलकोक्तिपरेष्वमीषु
नैवावधारयतु कोऽपि मुनित्वहानिम् ॥
नैवाचरेयुरपि किं मुनयः शरीर-
कर्माणि लौकिकमुदां जनकानि वा यत् ॥ ३३५ ॥
कण्डूयनप्रहसितादि न यन् निषिद्धं
यल् लोकतोषणकरं च तदादि कर्म ॥
शास्त्रेण नापि विहितं तदिदं मुनित्व-
व्याघातकारि न भवेदिति युक्तियुक्तम् ॥ ३३६ ॥
शारीरकर्म शयनाद्यखिलोऽपि जीवस्
तुल्यं समाचरतु तेन मुनित्वहानिः ॥
कस्यापि नैव भविता पशुतात्ततिर् वे-
त्येतत् प्रसिद्धतरमापशुपालभार्यम् ॥ ३३७ ॥
लोकस्य तुष्टिरपि शास्त्रविधिप्रसिद्धै-
वास्तीति तेन भवितैव मुनित्ववृद्धिः ॥
यत् स्वार्थहानिमवमत्य परार्थसिद्धिं
कुर्यात् सदेति विदितैव सतां सुनीतिः ॥ ३३८ ॥

तस्मात् पुरातनवचस्सु विधेर् निषेध-
स्यादेय एव भवितेति विविच्य भागः ॥
आह्लादकोऽपि मनसः स्थिरताविधायी-
त्यंशं न कोऽपि वितथं कमपि ब्रुवीत ॥ ३३९ ॥

येषां मनः स्थिरतरं रुचिकारिवाक्या-
पेक्षां विनैव न स तानि शृणोत्वथापि ॥
व्यर्थानि तानि न भवेयुरतिप्रसिद्ध-
वाक्येषु तेष्वधिकृता बहवो मनुष्याः ॥ ३४० ॥

नैतादृशं किमपि वस्त्विह लभ्यते यत्
सर्वार्थसाधकतया सफलत्वमेयात् ॥
एवं तु यत् क्व चिदपि स्वफलं लभेत
तत् सार्थकेतिपदवाच्यमतो न हानिः ॥ ३४१ ॥

तत्तद्रुजापहतिबोधकतच्चिकित्सा-
शास्त्रं निरामयजनेष्वफलं तथापि ॥
स्यादामयाविषु फलप्रदमेवमेव
सर्वं पुरातनवचोऽपि फलप्रदं स्यात् ॥ ३४२ ॥

लोकेष्वनेकविधबुद्धियुतेषु कश् चिद्
रागी न कश् चिदतिमन्दमतिश् च कोऽपि ॥
तेषां न बोधनमिहैकविधैर् वचोभि-
रित्याकलय्य मुनयो बहुधा वदन्ति ॥ ३४३ ॥

ये त्वन्यजन्मसुकृतादिविशुद्धचित्ताः
शास्त्रं विनैव सदसत् सुविवेचयन्ति ॥
तेषां कृते न यदि शास्त्रमदः कृतार्थं
नैतावता तु भविता वितथत्वमस्य ॥ ३४४ ॥

तस्मान् न कुत्र चिदपीह पुराणवाक्ये-
ष्वाशङ्कनीयमनृतत्वमतिप्रगल्भैः ॥
स्वस्यां मतौ सकलबुद्धिनिदर्शनत्वं
जानद्भिरेव मतयो यदसंख्यरूपाः ॥ ३४५ ॥

किं चानृतत्वमपि वाक्यगताक्षरार्थ-
मादाय नैव भवतीत्यपरोक्षमेव ॥
वक्तुर् धियो भवति यो विषयस् तदर्थ-
बाधादिनैव तदिति प्रथितं न केषु ॥ ३४६ ॥

अलं लक्षणादि परिकल्प्य पदैस् तदीय-
वाक्यार्थजातमपहाय पदान्तरार्थान् ॥
जानन्ति सूक्ष्ममतयोऽथ परानपि स्व-
तात्पर्यबोधनबलादवबोधयन्ति ॥ ३४७ ॥

नानाविधेष्वपि पुराणवचःसु चैवं
तात्पर्यमेव परिचेयमिहास्ति वक्तुः ॥
एवं तु नैव भवितानृतता पुराण-
वाक्येषु कुत्र चिदपीति विभावनीयम् ॥ ३४८ ॥

तातात् तदीयजरसो ग्रहणं ययातेः
सूनोर् घटेत न घटेत च तत्कथायाम् ॥
नैवावधेयमनृतत्वमदःसमस्त-
संदर्भगोचरपदार्थमतेरबाधात् ॥ ३४९ ॥

भोगान् न शाम्यति मनो हविषेव वह्निर्
वृद्धिं प्रयाति विषयैरिति तस्य तत्त्वम् ॥
तच् चेदबाधितमृतं च जगत्प्रसिद्धं
सर्वप्रघट्टकमदःपरमेव विद्यात् ॥ ३५० ॥

लोकेऽपि बीजगणनाय वदन् पटोल-
स्यायुः समा नव शतानि मृषाभिधायी ॥
नोच्येत बीजगणनाय यतस् तदुक्तिर्
नायुःप्रदर्शनपरा तु पटोलकानाम् ॥ ३५१ ॥

स्वीयां वपामुदखिदन् निगमोक्तिरेषा-
प्यत्यन्तशस्ततरतां कथयेद् वपायाः ॥
न त्वक्षरार्थमिति वेदविचारदक्षैर्
मीमांसकैरपि निरूपितमात्मतन्त्रे ॥ ३५२ ॥

एवं च सर्व इतिहासगणः पुराण-
वेदादिके निगदितो जनरञ्जनाय ॥
तेषां परस्परविरोधनिमित्तिका चेन्
मिथ्यात्वबुद्धिरिह तन् महती विनष्टिः ॥ ३५३ ॥

एवं सुतादिफलबोधकवाक्यजात-
मप्यर्थवादविधयैव सुयोजनीयम् ॥
नैवाक्षरार्थपरतां परिकल्प्य तस्या-
प्याशङ्कनीयमनृतत्वमृतेऽपि तस्मिन् ॥ ३५४ ॥

यत्राक्षरार्थपरतापहतेः पदानां
तात्पर्यगोचरपदार्थपरत्वमिष्टम् ॥
निन्दास्तवाद्यतिशयावगतिक्षमं तद्
वाक्यं वदन्ति निखिलार्थविदोऽर्थवादम् ॥ ३५५ ॥

पूरुप्रजापतिकथास्थपदार्थबाधान्
निन्दास्तुती विषयभोगवपासु वाक्यम् ॥
तात्पर्यतोऽवगमयेदिति सेतिहासः
प्रोक्तोऽर्थवादपदशक्यतया मुनीन्द्रैः ॥ ३५६ ॥

निन्दाश्रुतेर् झटिति तद्विषया निवृत्तिः
स्तुत्या प्रवृत्तिरतिमन्दमतेरपि स्यात् ॥
इत्यर्थवाद उपयुज्यत एव सर्व-
विध्यादिकेष्विति च तस्य कृतार्थतैव ॥ ३५७ ॥

यत्रार्थवादरहितोऽपि विधिर् निषेधो
वोच्येत तत्र परिकल्प्य तदर्थवादम् ॥
तस्य प्रवृत्तिविनिवृत्तिकरत्वमिष्ट-
मेवं च नैव किमपीह भवेदवद्यम् ॥ ३५८ ॥

वित्तैषणैषा महतोऽपि पुंसो
निपातयेच् चित्तमकार्यगर्त्ते ॥
मुनेरिदानीमिव किं ततः स्यात्
प्रवृत्तिरित्येव कुतो न कल्प्यम् ॥ ३५९

बहुत्र तैरेव यतो न्यरूपि
वित्तैषणाया भ्रममूलकत्वम् ॥
कथं च तेष्वात्मकथाविरुद्धा-
चारोऽप्यकस्मादिति कल्पनीयः ॥ ३६० ॥

दम्भं करोति मनुजोऽद्यतनोऽपि वित्त-
लोभादिनैव न वृथेति जगत्प्रसिद्धम् ॥
चेतोगतस्य निजतद्विपरीतबाह्य-
रूपैः सदापलपनं सुखकृन् न हि स्यात् ॥ ३६१ ॥

वित्तं च लोकसुखदं स्वत एव किं वा
वस्त्वन्तरोत्थसुखहेतुतया तदिष्टम् ॥
यद् वा सुखात्मकमिति प्रविविच्य विद्वाल्ँ
लिप्सेत तद् विविधदम्भमुखैरुपायैः ॥ ३६२ ॥

दुःखप्रदे हि विषये पुरुषप्रवृत्तिस्
तत्रैव युज्यत इति प्रथितं न केषाम् ॥
सौख्यात्मकं यदथ वा सुखसाधनत्वं
साक्षाच् छ्रयेदथ परम्परया भजेत् तत् ॥ ३६३ ॥

यद् यज् जडात्मकमदो न सुखं स्वरूपात्
कुत्रापि दृष्टमिति वित्तमपीदृगेव ॥
दुर्वर्णहाटकमहामणिविद्रुमादी-
त्येतत् प्रसिद्धतरमस्ति न कस्य पुंसः ॥ ३६४ ॥
यद् रूपगन्धरसशब्दमुखं दृगादे-
राप्यायकं निखिललोकमतं न तच् च ॥
स्वर्णादिके किमपि वीक्ष्यत इत्यमुष्मिन्
भ्रान्त्या जनोऽनुषजतीत्यतिचित्रमेव ॥ ३६५ ॥
नेत्रादिगोचरमनोहरगन्धमुख्यांस्
त्यक्त्वाऽपि लोकसुखदान् करविल्वतुल्यान् ॥
आकाशपुष्पसदृशे मनसोऽप्यगम्ये
धावत्यहो जन इतो न विचित्रमन्यत् ॥ ३६६ ॥
रूपादिसाधकतया सुखसाधनत्वं
स्वर्णादिकेऽस्त्यपि परम्परयैव यस्मात् ॥
तस्मान् न तत्र महतामनुरागवृद्धिर्
भ्रान्त्युत्थितेत्यपि न शङ्कितुमत्र शक्यम् ॥ ३६७ ॥
यस्मात् सुवर्णरजतादिषु लोकक्लृप्तः
सङ्केत एव सुखकृद्रसरूपहेतुः ॥
नैव स्वरूपत इहास्ति रसादिहेतु-
भावः कथं चिदिति तत्त्वदृशां समक्षम् ॥ ३६८ ॥

येषां मते घटपटादिपदार्थसत्त्वं
ज्ञानातिरिक्तमपि बाह्यमुरीक्रियेत ॥
तैरप्यवश्यमुपगम्यमनेकरूपं
हेतुत्वमेष्वखिललोकसमक्षसिद्धम् ॥ ३६९ ॥

वह्निं स्पृशेद् य इह तत्त्वविदप्यजानंस्
तुल्यस् तयोर् भवति दाह इति प्रसिद्धम् ॥
हेतुत्वमग्निगतमाहुरतः स्वरूपाज्
ज्ञानानपेक्षमपि दाहफलं प्रतीति ॥ ३७० ॥

शोकादिकं प्रति तु पुत्त्रधनादिनाशो
नो कारणं भवितुमर्हति तत्स्वरूपात् ॥
तत्त्वेन बुद्धिविषयस्य यतोऽर्थनाशा-
देरेव शोककरतादि जगत्प्रसिद्धम् ॥ ३७१ ॥

तद्वत् सुवर्णरजतादिषु रूपगन्धा-
देः साधकत्वमपि सौख्यकरस्य बोधात् ॥
तत्त्वेन न स्वत इति स्वकरूपतस् ते
नो हेतवोऽपि तु निजावगमेन वै स्युः ॥ ३७२ ॥

जानाति यो न कनकादिमहार्घतां त-
द्वस्तस्थितोऽपि कनकादिरसाधकः स्यात् ॥
सौख्यप्रदस्य रसरूपमुखस्य मृद्वत्
तन् नैष कारणममुष्य निजस्वरूपात् ॥ ३७३ ॥

ज्ञानीयकारणतयैव जनानुरागो
युक्तोऽत्र नैतदपि शङ्कितुमत्र शक्यम् ॥
स्वाधीनतैव मतिकारणकार्यभावे
सर्वत्र सर्वमनुजस्य हि लोकसिद्धा ॥ ३७४ ॥

यद्यन्यवस्तुषु जगत्परिकल्पितः स्यात्
सङ्केत इष्टरसरूपमुखानि तानि ॥
नो साधयेयुरपि किं कनकादिवद् यद्
वैषम्यमत्र महदाकलयेन् मनुष्यः ॥ ३७५ ॥

जानीत नैव कनकादिषु मृत्तिकादेर्
वैशिष्ट्यमस्य न चलेद् व्यवहारमार्गः ॥
यानासनादिरखिलोऽपि हि वित्तमूल
एवावलोक्यत इहेत्यपि नैव शङ्क्यम् ॥ ३७६ ॥

यद् ये सुवर्णमपि मृत्तिकयैव तुल्यं
जानन्ति पक्षिपशुकीटसरीसृपाद्याः ॥
तेषां न किं प्रचलति व्यवहारवर्गः
सौख्यादिहेतुरनिशं मनुजैः समानः ॥ ३७७ ॥

किं च स्वकीयशयनासनभोजनादि-
मात्रोपयोगिकनकादिषु कस्य वाञ्छा ॥
तत्साधनत्वमतिमात्रनिमित्तिका स्या-
देतादृशी महति मानवसर्गवर्गे ॥ ३७८ ॥

यस्येदृशी मतिरसौ तु जगद्विचित्रो-
ऽप्यावश्यकं शयनभोजनभाषणादि ॥
कुर्वन् नपि प्रचुरहाटकमुख्यवित्त-
मालोकयेन् मृदमिवेति न संशयोऽत्र ॥ ३७९ ॥

यद्यप्यशेषमपि वस्तु करोति किं चित्
कार्यं हितं भवतु वाप्यहितं तु कस्य ॥
तत् किं सुवर्णरजतादिषु नेदृशी स्यात्
का चिद् विचित्रतरतेति न शङ्कनीयम् ॥ ३८० ॥

यद् गाढरागमिह मानव आतनोति
वैचित्र्यमात्रमुपपादकमस्य न स्यात् ॥
यत् सर्ववस्तुषु न तादृगसौ जनानां
वैचित्र्यवत्स्वपि परस्परमुत्तमेषु ॥ ३८१ ॥

एतन्महार्घतरताऽपि जनानुराग-
मूलैव नान्यगुणहेतुरिति प्रसिद्धम् ॥
यद् वाल्पमेव भवतीह सुवर्णरौप्या-
दीत्यस्तु कारणममुष्य महार्घतायाम् ॥ ३८२ ॥

तुल्ये गुणेऽपि महती बहुला समर्घा
लघ्वी तु गुर्जरभवा त्रिपुटा महार्घा ॥
सर्वामयस्य हरणी त्रिफला समर्घा
तस्मान् न मूल्यविनियन्त्रितमुत्तमत्वम् ॥ ३८३ ॥

लोकस्य चात्र कनकादिषु योऽनुरागो
नो केवलं स विषयान्तरलिप्सयैव ॥
किं त्वेतदेव विषयान्तरमन्तरैव
सौख्यस्य साधकमितीष्टधियैव तत्र ॥ ३८४ ॥

नैवान्यथा निजकरस्थितभोगहेतून्
स्वापाशनादिकमुपेक्ष्य जनस्य तत्र ॥
क्लेशावहापि घटते सततं प्रवृत्तिः
स्वर्णादिकेष्विति महाधनिकैर् विचार्यम् ॥ ३८५ ॥

संभाव्य सौख्यबहुतास्थिरतादि बुद्ध्या
तत्र प्रवृत्तिरिति नैव वचोऽपि युक्तम् ॥
सर्वः शरीरपतनावधि वित्तलिप्सुर्
दुःख्येव नो यदिह भोगपरस् तु कश्चित् ॥ ३८६ ॥

कस्यापि नैव मनुजस्य निमेष एको-
ऽप्येतादृशो व्रजति वित्तपरायणस्य ॥
संप्राप्तवित्तसुखमात्रपरो न वाञ्छा-
दुःखं यदाऽनुभवतीभ्य इति प्रसिद्धम् ॥ ३८७ ॥
पुत्त्रादिरस्य सुखमाप्स्यति मत्प्रयाणा-
न्तेऽपीति धीरपि न साधु नियोजिका स्यात् ॥
पुंसो धनेषु यदिहान्यभवेऽपि पुत्त्रो
नार्थं करोति किमपीति निरुक्तमेव ॥ ३८८ ॥
किं चात्मजो यदि निजासुवियोगकाला-
दूर्ध्वं सुखी प्रभविताथ भवेद् दरिद्रः ॥
तेनास्य नोपकृतिरप्यपकारलेशः
स्यादित्यपीह विमृशेयुरवश्यमज्ञाः ॥ ३८९ ॥
पुत्त्रादिभाविसुखसंभवहेतुकं स्यात्
सौख्यं निजासुधरणावसरेऽस्य पुंसः ॥
तस्मात् प्रवृत्तिरुचितैव जनस्य वित्ते-
ष्वित्यप्युपर्युपरिबुद्धिवशान् न शङ्क्यम् ॥ ३९० ॥
बौद्धोऽयमप्युदितकारणकार्यभावो
वित्तस्य पर्यवसितः स्वसुखं प्रतीति ॥
सोऽयं स्वनिघ्न इति तूक्तमतः प्रयास-
साध्यस्य राय इह कोऽस्त्युपयोगलेशः ॥ ३९१ ॥
बुद्धैव यत् तु परिकल्पयितव्यमेत-
देवं न कल्प्यसुरुगौरवयुग् यथा स्यात् ॥
तस्मान् न वित्तसुखकारणकार्यभावः
कल्प्यः प्रयासकमनीयधनादिगर्भः ॥ ३९२ ॥

धर्माय वित्तमिदमर्ज्जयितव्यमेवे-
त्येषा मतिस् तु सहसा न घटेत यस्मात् ॥
ये धार्मिकाश् च्यवनकुम्भजभार्गवाद्याः
ख्याता न ते धनवशात् तपसैव किं तु ॥ ३९३ ॥

आभाणकोऽपि विदितस् त्विह लौकिकानां
दानाम्बुभिः कनककर्दममार्जनायाः ॥
दूराद् विवर्जनममुष्य वरं लघुत्वा-
दित्यादि सोऽपि सुधियामनुपेक्षणीयः ॥ ३९४ ॥

तस्माद् विचाररमणीय इहास्ति कश् चिन्
नामुष्मिकोऽपि धनसाध्यजनार्थलेशः ॥
यद्यप्यथापि सुदृढोऽत्र जनानुरागो
भ्रान्त्युत्थितो न पुनरेष विमर्शपूर्वः ॥ ३९५ ॥

एवं च नैव सदसत्त्वविवेकचुञ्चु-
व्यासादिनिर्मितपुराणनिबन्धरत्ने ॥
ईदृग्विपर्ययनिदानकता खपुष्प-
तुल्या न कारणमृतेऽपि भवेदकस्मात् ॥ ३९६ ॥

लोकैषणा तु न विमुञ्चति पुत्त्रवित्त-
वस्त्राशनादिपरिहारवतोऽपि पुंसः ॥
पुत्त्रैषणादिरपि यद् यशएषणार्थं
एवेति वेदपुरुषः शिरसाभ्यनन्दत् ॥ ३९७ ॥

अद्यापि लौकिकजनः सुतवित्तकाङ्क्षां
कीर्त्यर्थमेव तनुते बहुतापदात्रीम् ॥
लोकप्रसिद्धमिदमेव कुतो न तेषां
वाक्ये मृषात्वगमकं न च वाच्यमेतत् ॥ ३९८ ॥

लोकैषणा यदनृतोक्तिपरस्य पुंसो
नासादयेत् स्वविषयानिति सुप्रसिद्धम् ॥
नूनं जनोऽनृतपरः सततं विनिन्द्यः
स्तुत्यः कदापि न भवेदिति को न वेत्ति ॥ ३९९ ॥

निन्दास्तुती मनुजमानसदुःखसौख्य-
हेतू जगत्सु विदिते अपि कस्य हेतोः
एतत् समस्तमवधार्य महाप्रयास-
साध्यस्तुतावनुषजेदनिशं मनुष्यः ॥ ४०० ॥

स्वस्मादधःस्थितजनानवलोक्य सर्वैः
स्तुत्योऽस्त्युपर्युपरि दृष्टिकरस् तु निन्द्यः ॥
संख्या त्वनन्तभवजीवगणस्य कर्तुं
शक्या न केन चिदपीति पुरा निरुक्तम् ॥ ४०१ ॥

दुःखं सुखं च मनुजस्य यदस्ति बाह्य-
वस्तूत्थितं तदनुरूपमदोऽस्तु चित्ते ॥
यत् केवलं तु मनसैव सुखादि जन्य-
मेतन् न बाह्यपरतन्त्रमिति प्रसिद्धम् ॥ ४०२ ॥

यद्यप्यशेषमपि दुःखसुखादिचेतो-
वृत्त्यैव भाति न पुनः स्वयमस्ति बोध्यम् ॥
एवं च तद्द्विविधतोपरि पश्यतो नो
साधारणस्य मनसि स्थिरतां लभेत ॥ ४०३ ॥

सूक्ष्मं तथापि सुविचारयतां नराणां
तद्द्वैधता स्फुटतरैव यतोऽखिलस्य ॥
जन्तोर् बहिर्भवपदार्थविपर्ययेण
दुःखं सुखं भवति धीविषयः कदा चित् ॥ ४०४ ॥

यद् दुःखदं जपतपःप्रभृति प्रसिद्धं
तत् स्वेच्छयैव कृतबुद्धय आचरन्ति ॥
सौख्यप्रदं परिहरन्ति च भोजनादींस्
तन् नैव बाह्यसुखदुःखधिया घटेत ॥ ४०५ ॥

संभाव्य भाविसुखमेव बहिःस्थवस्तु-
जन्यं जपादिषु जनोऽनुरजत्यदभ्रम् ॥
दुःखप्रदेष्विति न मानससौख्यदुःख-
मावश्यकं पृथगिदं तु न शङ्कनीयम् ॥ ४०६ ॥

यस्माद् यदा जपतपःसु जनानुरागो
नैवास्ति तस्य सुखभोगलवस् तदानीम् ॥
चित्तेन कल्पितमिदं तु भविष्यदेवं
चेदं न बाह्यमिति सूक्ष्मधिया विभाव्यम् ॥ ४०७ ॥

जन्मान्तरे भवतु वेह भवे तदस्तु
भावित्वकाल इदमात्मधियैव कल्प्यम् ॥
सौख्यादि तद् द्विविधताऽस्य परिस्फुटैवे-
त्यस्यां न कोऽपि सहसा विवदेत विज्ञः ॥ ४०८ ॥

किं च स्तुतिस् त्वमसि पण्डित आत्मनिष्ठ
इत्यादिशब्दनिवहो जगति प्रसिद्धा ॥
निन्दा तु बोधरहितस् त्वमसि प्रमूढ
इत्यादिशब्दगण एव मता नराणाम् ॥ ४०९ ॥

वाक्यद्वयं च सममेव कुतस् तदेकं
दुःखं समर्पयति नान्यदिति स्वबुद्ध्या ॥
सम्यग् विमृश्य मतिमान् प्रयतेत लोक-
श्लाघाप्रयास इति वन्द्यतमैर् विभाव्यम् ॥ ४१० ॥

शब्दस्थिता मधुरता श्रवसः सुखस्य
हेतुस् तथैव कटुता सकलस्य जन्तोः ॥
दुःखस्य हेतुरिति च प्रथितं विपञ्ची-
वंशीक्रमेलकखरादिरवे न कस्य ॥ ४११ ॥

तद्वन् न किं चिदपि काटवमार्दवाद्य-
प्यालोच्यते स्तुतिविगर्हणवाक्ययोस् तु ॥
केनापि तद् विषमता मिथ एनयोर् या
सा केवलं निजधिया रचिता मनुष्यैः ॥ ४१२ ॥

अर्थावबोधकविगर्हणवाक्यमात्म-
वाच्यार्थबोधजननान् मनुजस्य दुःखम् ॥
उत्पादयेत् स्तुतिपरं वचनं तु सौख्यं
भूतार्थबोधकवचोवदिति त्वशङ्क्यम् ॥ ४१३ ॥

शाब्दप्रमाजनकताप्तनिरुक्तवाक्ये-
ष्वङ्गीकृता न तु शठादिवचस्स्वपीति ॥
नैवावगच्छति जनः कतमोऽपि चात्म-
गर्हापरेषु सहसाप्ततमत्वमन्तः ॥ ४१४ ॥

किं च स्वबोधविभवादि विजानतोऽपि
मन्दो दरिद्र इतिबाधितवाक्यजन्यः ॥
क्रोधोऽभ्युदेति यदिदं न तदर्थबोधात्
किं त्वात्मनिन्दनपदश्रवणात् परं तत् ॥ ४१५ ॥

तेजोवधं समवगम्य विनिन्दनेन
रुष्टो भवेन् मनुज इत्यपि नात्र शङ्क्यम् ॥
तेजोविनाशकरताऽपि वचोविशेषे
बाह्या न किं तु रचिता स्वधियैव यस्मात् ॥ ४१६ ॥

निन्दाप्रसारजनिता मनुजस्य लोके
रूपादिबाह्यविषयापहतिर् ध्रुवैव ॥
संभावितेति मतिमद्भिरसौ प्रयासाद्
दूरान् निवर्त्यत इहेत्यपि नैव शक्यम् ॥ ४१७ ॥

रूपादिबाधविषया मनुजस्य येयं
संभावना न खलु बाह्यपदार्थ एषा ॥
बुद्ध्यैव लोकरचितेति न सापि बाह्य-
वस्तु प्रसाधयितुमीष्ट इतीति बोध्यम् ॥ ४१८ ॥

आस्तां कथं चिदपि सा स्वरूप-
मुख्यबाह्यार्थनाशविषयापि तथापि नेयम् ॥
उत्पत्स्यते स्तुतिविगर्हणयो रसादि-
लाभादिकं प्रति बहुव्यभिचारदृष्टेः ॥ ४१९ ॥

चौर्यादिना परधनान्यपहृत्य रूप-
गन्धादिलाभमुपयान्ति नरा धरायाम् ॥
ते स्तेनभिन्नबहुलोकविनिन्दिता अ-
प्यत्यन्तबाह्यसुखिनः किमु नैव दृष्टाः ॥ ४२० ॥

एवं विशिष्टनरवन्दितपादयुग्मा
रूपादिबाह्यसुखलेशमपि त्यजन्तः ॥
किं नैव साधुचरिते निरताः सदैव
धीरोत्तमा भुवनरत्नवराश् च दृष्टाः ॥ ४२१ ॥

आढ्यो न निन्द्यत इह क्व चनाधनस् तु
स्तुत्यो न चास्ति जगतीति मते त्विदानीम् ॥
वित्तात् स्तुतिः स्तवनजं धनमित्यमुष्मिन्
नन्योऽन्यसंश्रयनिवारणमप्यशक्यम् ॥ ४२२ ॥

स्तोत्रस्य नैव धनलाभनिमित्ततास्ती-
त्युक्तौ न शिष्यत इयं जगदेषणापि ॥
वित्तैषणा तु न यथा निजदेहलाभ-
माप्नोति तत् तु कथितं पुर एव सर्वम् ॥ ४२३ ॥
किं च स्तवादिषु रतिर् मनुजस्य येयं
साऽसंभवान् न किल सर्वजनानपेक्ष्य ॥
किं तु स्वलक्ष्यकतिचिन्मनुजानपेक्ष्यै-
वास्तीति कस्य मनुजस्य न निर्विवादम् ॥ ४२४ ॥

एवं तु लक्ष्यकरणं निजबुद्धिसाध्य-
मेवास्ति तत् किमयमात्मविनिन्दकादीन् ॥
लक्ष्यीकरोति निजवन्दनकर्तृभावाद्
येन प्रयासनिरतोऽतितरां च दुःखी ॥ ४२५ ॥

एतादृशे महति भिन्नरुचौ भवेऽस्मिञ्
जीवा न कस्य सुलभाः स्तुतिकारिणस् तु ॥
कस्यां स्थितौ न किममून् प्रकरोतु लक्ष्यं
येन प्रयासरहितोऽतितरां सुखी स्यात् ॥ ४२६ ॥
किं च स्तुतिः कृतिपटुत्वभवा कृतिस् तु
नानेति पर्य्यवसिताः स्तुतयो विभिन्नाः ॥
तत्तत्क्रियाकुशलवर्गनिरूपितास् तत्
तत्तद्द्विधैव रचिताः स्तुतयो न बाह्याः ॥ ४२७ ॥

एतादृशा न मनुजा बहवः प्रसिद्धाः
स्तोत्रं य आत्मघटितोत्तमवर्गजातम् ॥
त्यक्त्वाऽपि निन्द्यपरवर्गभवस्तवेषु
रात्रिंदिवं निरतमानसवृत्तयः स्युः ॥ ४२८ ॥

चौरादिवर्गमहनीयगुणाः कफल्ल-
मुख्या जनुःप्रभृतिसाहसिका न किं तु ॥
वर्गं स्वकीयमपहाय सुखान् निविष्टा
वर्गान्तरे स्तवनकाङ्क्षिण एव तत्र ॥ ४२९ ॥

प्रह्लादनारदसुयोधनरावणाद्यास्
त्यक्त्वा स्वकीयकुलरीतिमुपाददानाः ॥
रीत्यन्तरं तदुचितस्तुतिजं सुखं किं
नापुस् तदन्यकुलनिन्दनजं च दुःखम् ॥ ४३० ॥

किं प्राप्तवर्गजनुतिर् न नुतिर् यदन्य-
वर्गोत्थितां स्तुतिमसौ मनुजोऽभिवाञ्छेत् ॥
एवं विनिन्दनमपीति सदैव पुंसां
निन्दा स्तुतिश् च न समृध्यति हीयते वा ॥ ४३१ ॥

प्राप्ते त्वनुत्तमतमे विषयेऽपि पुंसां
त्यागस्पृहानधिगते त्वभिलाषुकत्वम् ॥
स्वाभाविकं मतिमतामपि पूर्वमुक्तं
तद् भ्रान्तिजः स्तुतिषु सर्वजनप्रयासः ॥ ४३२ ॥

नैतादृशो मुनिवरेषु निरुक्तचिह्न-
युक्तेषु फल्गुजनयोग्यविपर्ययोऽयम् ॥
हेतुं विनैव घटते सहसेति तेषां
वाणी मृषा न जगदेषणया प्रवृत्ता ॥ ४३३ ॥

हाहा समस्तजनता सुतदारवित्त-
लोकैषणादिभुजगैः प्रतिलोम दष्टा ॥
कस् तां समस्तनिगमोदधिमन्थनोत्थ-
ज्ञानामृतेन कुरुतां प्रकृतिप्रतिष्ठाम् ॥ ४३४ ॥

श्रीमद्गणेशशिवकेशववह्निभानु-
दुर्गागुरूक्तिनिगमादिपदाभिलक्ष्यम् ॥
क्राइस्ट्महम्मदरसूलजिनाद्यनन्त-
रूपं यदेतदमृतं त्वमृतप्रदं वा ॥ ४३५ ॥

तेषां वचांसि न मृषा न च नारदादेः
प्रागुक्तमुन्युचितचिह्नसमन्वितस्य ॥
इत्थं विमृश्य मतिमान् वचसां विरोधा-
व्यापातदोषमपहाय भवेद् विधिज्ञः ॥ ४३६ ॥

त्यक्त्वा समस्तविषयान् मुनितुल्यवृत्तिर्
यः स्यात् स एव मुनिवाक्यविरोधहर्त्ता ॥
स्यादन्यथा तु विषयापहृताल्पबुद्धेर्
बाधादिरेव मुनिवाक्तु सुदुर्निवारः ॥ ४३७ ॥

इत्थं स वर्षयुगलेन विचार्य काश्यां
कृच्छ्रादिभिः क्षयितवान् विषयाभिलाषम् ॥
देहस्थितिं तु निगमागमतत्त्वसाक्षा-
त्काराय सूक्ष्मतनुमप्युररीचकार ॥ ४३८ ॥

चित्तस्थसूक्ष्मविषयोत्थितवासनादि-
विक्षेपशान्तिपरतत्त्वसमक्षतादेः ॥
हेतुर् य एष तमियेष समस्तकर्म-
संन्यासधर्ममतिदुष्करमप्ययत्नात् ॥ ४३९ ॥

षट्शास्त्री परमेश्वरस् तदयुगं श्रीरामनाथः शशी
मोद्बाधा नलिनानि यस्य भगवद्दासश्च सांयात्रिकः ॥
नाव्या श्रीहरिकृष्णकीर्त्तिरुडुपं रध्या तिमिर् विष्णुदस्
तस्यानन्धुदधेः सदुक्तिमणिदः कल्लोल आद्योऽभ्युदैत् ॥ १ ॥